कविराक्षस :- महाराअ, तुह किदे कअलीगब्भमसिणपंडुरेहिं अंगेहिं दुदीआ चंद्दलेहा विअ मे पडिभाइ। [महाराज, तव कृते कदलीगर्भमसृणपाण्डुरैः अङ्गैः, द्वितीया चन्द्रलेखेव प्रतिभाति मे]

कान्तिमती :- सहि सुलोअणे, महाराओ कहिं दाणिं ? [सखि सुलोचने, महाराजः कुत्र इदानीं ?]

कविराक्षस :- एत्थ एव्व सो [अत्र एव सः]

सुलोचना :- अम्हाणं रण्णा पिअं सल्लवन्तो अत्थाणीमंडवे चिट्ठइ। [अस्माकं राज्ञा प्रियं संल्लपमानः आस्थानमण्डपे तिष्ठति]

कान्तिमती :- किं दाणीं अंतेउरपरामरिसणिमित्तं एत्थ णाअच्छइ महाराओ ?। [किमिदानीं अन्तःपुरपरामर्शनिमित्तं अत्र नागच्छति महाराजः ?]

कविराक्षस :- महाराअ, तुह दंसणे ताए उक्कंठं पेक्खसु। [महाराज, तव दर्शने तस्याः उत्कण्ठां प्रेक्षस्व]

सुलोचना :- अणण्णाहीणा खु राआणो। [अनन्याधीनाः खलु राजानः]

कविराक्षस :- कविरक्खसं विसज्जिएत्ति भणाहि। [कविराक्षसं विसृज्य इति भण]

राजा :- वयस्य, यावत्कान्तिमतीसङ्घटनं त्वदधीनमीमं जानीहि।

**कान्तिमती :-** अम्हाणं घरए महाराअसमागमणेण ण मे अत्थि को वि विसेसो, पच्चुअ णिअभवणगदस्स तस्स असंभाविददंसणदाए णिरासं उवरदं चिठ्ठइ हिअअं । दाणिं उण, समीवगदस्स दंसणसंभावणाए समुक्कंठांतरलं पुणो पुणो पप्फुडइ । **[अस्माकं गृहे महाराजसमागमेन न मेऽस्ति कोऽपि विशेषः, पश्चात् निजभवनगतस्य तस्य असम्भावितदर्शनतया निराशं उपरतं तिष्ठति हृदयम् । इदानीं पुनः, समीपगतस्य दर्शनसम्भावनया समुत्कण्ठातरलं पुनः पुनः प्रस्फुटति]**

**राजा :-** अयि बाले, त्वन्मुखम्बुजान्निमान्यक्षराणि श्रोतुमेव वज्रेण निर्मितं मे हृदयम् ।

**कान्तिमती :-** अइ सुलोअणे, एत्तिअं एव्व दाणिं अहिलस्सम्मि पुणो वि तं महाभाअं पेक्खियंत्ति । **[अयि सुलोचने, एतावदेव इदानीं अभिलषामि, पुनरपि तं महाभागं प्रेक्षिष्य इति]**

**कविराक्षस :-** अलं दाणिं अत्तणो गोवणेण, जाव एदाए दंसणपहं ओदरामो । **[अलमिदानीं आत्मनः गोपनेन, यावत् एतस्याः दर्शनपथमवतरावः]** (इति राजानं हस्ते गृहीत्वा, उपसृत्य) सहि, पेक्ख पेक्ख । **[सखि, पश्य, पश्य]**

**कान्तिमती :-** (ससंभ्रमलज्जं). (अपवार्य) अइ सुलोअणे, अम्हाणं वअणं सव्वं वि महाराएण सुदंत्ति वेवइ विअ मे हिअअं । **[अयि**

सुलोचने, अस्माकं वचनं सर्वमपि महाराजेन श्रुतमिति वेपत-
इव मे हृदयम्] (इति अपसरति)

सुलोचना :- सहि, मा लज्जेहिं। फलिदं खु तुह मनोरहेण।
सखि, मा लज्जस्व। फलितं खलु तव मनोरथेन]

(इति कान्तिमतीं हस्ते गृहीत्वा, राजानमुपसृत्य)

जेदु महाराओ [जयतु महाराजः]

राजा :- अपि कुशलं ते सख्याः ?

सुलोचना :- (सस्मितं) अज्ज, महाराअदंसणेण एदाए तह एव्व।
[अद्य महाराजदर्शनेन, एतस्याः तथा एव]

राजा :- (विहस्य) त्वामेव सखीमुद्दिश्य मयेदं भणितम्।

सुलोचना :- तदो एव्व तं उद्दिसिअ उत्तरं दिण्णं। [तत एव
तामुद्दिश्य उत्तरं दत्तम्]

राजा :- स्वाभाविकेष्वपि वचनेषु चाटूकरणे निपुणाऽसि।

सुलोचना :- परहिअआभिण्णत्तणेत्ति भणिदव्वं। [परहृदयाभिज्ञत्वे
इति भणितव्यम्]

राजा :- अयि सुलोचने, कविराक्षसस्य भगिनी भवितुमर्हति भवती।

कविराक्षसः :- (कान्तिमतीमुद्दिश्य) पिअसहि, तुमं वि किंचि चाटुअं
कहेहि। [प्रियसखि, त्वमपि किञ्चिच्चाटु कथय]

कान्तिमती :- (स्वगतं) ण खु अहं अज्जकविरक्खसस्स बहिणी । ता किं वि ण जानामि । [न खल्वहं आर्यकविराक्षसस्य भगिनी । तस्मात्किमपि न जानामि ] (प्रकाशं) सहि सुलोअणे, एहि घरअं गच्छह्म । [सखि, सुलोचने, एहि, गृहं गच्छावः ]

कविराक्षस :- सुट्ठु भणिदं तुए चाडुअं । [सुष्ठु भणितं त्वया चाटु ]

(सर्वे हसन्ति)

सुलोचना :- (जनान्तिकं) सहि, पच्चा, किंवि ण कहेहि । दाणिं एव्व लज्जं विसिज्जिअ जहेच्छं पेक्ख महाराअं । [सखि, पश्चात् किमपि न कथय । इदानीमेव लज्जां विसृज्य यथेच्छं पश्य महाराजम् ]

कान्तिमती :- उवरि ज्जं किंचि होदु । दाणिं वुण महाराअस्स पुरदो अवट्ठादुं अत्तणा ण पारेमि । [उपरि यत्किञ्चित् भवतु । इदानीं पुनः महाराजस्य पुरतः अवस्थातुं आत्मना न पारयामि ]

राजा :-

अदयं भिनत्ति हृदये मामिषुजालेन मनसिजो दयिते ।
अवलोकनैरभिनवं हरिमणिवर्मेव कलय वक्षसि मे ॥
-६२

कान्तिमती :- (स्वगतं) लज्जिदाए मह किंचि वि कादुं ण क्खमं तुह वअणं। [लज्जिताया मम किञ्चदपि कर्तुं न क्षमं तव वचनम्]

कविराक्षस :- (स्वगतं) अयि सुलोअणे, पासादग्गगदां तत्तहोदिं दट्ठूण एआरिसीए गहणमअणवेअणाए अजस्सं पीडिज्जंते महाराओ। (प्रकाशं) दआं कादुं अअं एव्व ओसरो एदाए। [अयि सुलोचने, प्रासादाग्रगतां तत्रभवतीं दृष्ट्वा एतादृश्या गहन-मदनवेदनया अजस्रं पीडिष्यते महाराजः। (प्रकाशं) दयां कर्तुं अयमेवाऽवसरः एतस्याः]

सुलोचना :- सहि, देहि सेउत्तरं [सखि, देहि स्वोत्तरम्]

कान्तिमती :- (स्वगतं) गुरुअणपराहीणाए मए किं कादव्वं। जइ भगावसादो इमिणा महाभाएण संगदा होम्मि तदो णिव्वुदा भविस्सं। अण्णहा, का जीविस्सदि, का वा किं पुछिदव्वा। (प्रकाशं) सिग्घं एव्व जणणिं पेक्खिदुं गच्छम्ह ति। [(स्व) गुरुजनपराधीनया मया किं कर्तव्यम्। यदि भाग्यवशात् अनेन महाभागेन सङ्गता भवेयं, तदा निर्वृता भविष्यामि। अन्यथा, का जीविष्यति, का वा किं प्रष्टव्या। (प्र) शीघ्रमेव जननीं प्रेक्षितुं गच्छावः।]

सुलोचना :- अइ, जणणिं कदा वि किं ण जाणासि? [अयि जननीं कदापि किं न जानासि?]

कान्तिमती :- किं कादव्वंति कहेसि ? [किं कर्तव्यमिति कथयसि ?]

सुलोचना :- खणमेत्तं एत्थ चिट्ठ। तदो गच्छम्ह। [क्षणमात्रं अत्र तिष्ठ। ततः गच्छावः]

राजा :- (अपवार्य) सखे, पश्य, तद्वचनश्रवणसमनन्तरमेव —

लज्जामुकुलितवदनं मन्दस्मितकान्तिविलसितकपोलम्।
मन्दं सम्प्रति सख्याः पश्चाद्भागं व्रजत्येषा। -६३

(स्वगतं) अस्याः खलु —

प्रतिवीक्षणे मुकुलितं तद्विरहे भूरि विकसितं सुदृशः।
विविधमपाङ्गविलोकितं अधिकं करोति हृदयमधुना मे॥
-६४

कविराक्षस :- अइ सुलोअणे किं चि भणिदव्वं, एत्थ आअच्छदु होदी। [अयि सुलोचने, किञ्चिद्भणितव्यम्, अत्र आगच्छतु भवती]

(कान्तिमती सुलोचनायाः चलाञ्चलं गृह्णाति)

सुलोचना :- अइ, विसज्जेहि मं। [अयि विसृज मां]

कान्तिमती :- (स्वगतं) जं महाराअदंसणं अजस्सं मए पाथ्थीअदि। तण्णिमित्तं एव्व अय्यकविरक्खससुलोअणाहिं एत्तिओ संरंभो

करीअदि । मए पुण विघडीअदित्ति जिदं लज्जाए । [यन्महाराजदर्शनं अजस्रं मया प्रार्थ्यते । तन्निमित्तमेव आर्यकविराक्षससुलोचनाभ्यां एतावान्संरम्भः क्रियते । मया पुनर्विघट्यत इति जितं लज्जया]

**सुलोचना :-** महाभाअ, तुह सण्णिहाणे एव्वं एसा लज्जेदि । अण्णदा महंतेण विरहेण पीडिज्जंती परिअणं वि पीडेदि । एदं वि सुणादु भवं । जदा एदाए णअणमग्गं गजाहिरूढो तुमं संपत्तो तदप्पहुदि कमलिणीपत्तमात्तकप्पिदपरिहाणा, दूसहणीसामणीसासवेअमसिणीकिदाहरबिंबा, दावारमेत्तविमुहमाणसा, आहारं णिंद्दं वा ण जाणादि । किंअ, सव्वंगविसप्पंतदहणकप्पाणप्पकंदप्पजूरवेअविसपंडरं सरीरं पेक्खिअ चंदणालेवणिमित्तं समीवसंपत्तं सहीअणं, किदं किदं करणेणेत्ति णिवारेइ । अविअ, विरहाणलढंज्जंतहिअअंधनजणिदतिक्खसंदावमलिणमुत्तिअहारा एसा णीलमणिहारो कुदो वेत्ति विह्मिदा होदि । अण्णं अ, वम्महकरमुत्तणिअहिअअलग्गसरणिअरमिहो वइअरसमुट्ठिददहणज्जालाविद्दुदकंचणभूसणविलित्तसरीरा, मज्झम्मि मज्झम्मि पुव्ववव्वथं पच्चावण्णा विअ दिसइ । एदंअ, अजस्सं वि तुमं एव्व सुमरंती करदलविक्खित्तगंडमंडला, णअणंतरणिरंतरगलिदबाप्फजआ, चिट्ठइ । चंदाभ्भुदये अ, चंडादववुड्ढए, सहि, सरं अवगाहेदुं गच्छह्मित्ति भणदि । अहवा, एदाणं वअणाणं णात्थि उवरमो । तत्तहोदा एदं परिण्णादंव्वंति मए भणिदं । इदो वरं करणिज्जे पमाणं महाराओ । [महाभाग, तव सन्निधाने एवं

एषा लज्जते। अन्यदा, महता विरहेण पीड्यमाना परिजनमपि पीडयति। एतदपि शृणोतु भवान्। यदा एतस्याः नयनमार्गं गजाधिरूढस्त्वं सम्प्राप्तः, तदा प्रभृति कमलिनीपत्रमात्रकल्पित-परिधाना, दुस्सहनिस्सीमनिश्वासवेगसमीकृताऽधरबिम्बा, द्वार-मात्रविमुखमानसा, आहारं निद्रां वा न जानाति। किञ्च, सर्वाङ्गविसर्पदहनकल्पानल्पकन्दर्पज्वरवेगविसपाण्डरं शरीरं प्रेक्ष्य चन्दनालेपनिमित्तं समीपसम्प्राप्तं सखीजनं, "कृतं कृतं करणेन" इति निवारयति। अपि च, विरहानलोत्थितहृदयेन्धनजनित-तीक्ष्णसन्तापमलिनमौक्तिकहारा, "एषः नीलमणिहारः कुतो वा" इति विस्मिता भवति। अन्यच्च, मन्मथकरमुक्तनिजहृदयलग्न-शरनिकरमिथोवलयसमुत्थितदहनज्वालाविद्युत्काञ्चनभूषण-विलिप्तशरीरा, मज्जं मज्जं पूर्वावस्थां प्रत्यापन्ना इव दृश्यते। एतच्च, अजस्रं अपि त्वामेव स्मरन्ती करतलविक्षिप्तगण्डमण्डला, नयनान्तरनिरन्तरगलितबाष्पजला, तिष्ठति। चन्द्राभ्युदये च चण्डातपबुद्ध्या "सखि, सरः अवगाहितुं गच्छाव" इति भणति। अथवा, एतेषां वचनानां नास्त्युपरमः। तत्रभवता एतत्परिज्ञातव्यमिति मया भणितम्। इतः परं, करणीये प्रमाणं महाभागः।

राजा :-

क्रमशः सरोरुहाक्षी कालेन चिरेण यदनुभूतवती।
त्वद्वचनश्रवणादिह युगपदशेषं मया तदनुभूतम्॥ -६५

[ कान्तिमती कृत्रिमरोषमभिनीय, निर्गन्तुकामा कतिचित् पदानि ददाति ]

[ सुलोचना सव्याजं बहिर्निर्गत्य, तां निवारयति ]

[ प्रविश्य चम्पकलता ]

चम्पकलता :- संदिट्ठ म्हि देवीए, भट्टिदारिअं आणेहि त्ति । सा कहिं दाणिं दट्ठव्वा । (इति परिक्रामति) [सन्दिष्टा देव्या, भर्तृदारिकामानयेति । सा कुत्र इदानीं द्रष्टव्या]

( राजकविराक्षसौ आकर्ण्य, वैलक्ष्यं नाटयतः )

सुलोचना :- महाभाअ, अह्माणं हिअअणिव्विसेसा चंपअलदा मंतेदि । ता ण संकणिज्जा एसा । [महाभाग, अस्माकं हृदयनिर्विशेषा चम्पकलता आमन्त्रयते । तस्मान्न शङ्कनीया एषा ]

चम्पकलता :- (पुरो विलोक्य) एसा खु चित्तसालामुहे सुलोअणाए समं भट्टिदारिआ चिट्ठइ । (इत्युपसर्पति, चित्रशालाभ्यन्तरे दृष्टिं दत्वा, स्वगतं) अह्महे, अव्वकविराक्खससहिदो महाराओ वि एत्थ एव्व । होदु, देविए णिओअं णिवेदेमि । (प्रकाशं) भट्टिदारिए, भाआणगरादो अह्माणं भट्टिणो वुत्तंतो समागदो, "दाणिं इदो णिग्गदस्स देव्वस्स महंतो खु कालो संजादो । तदो खु लद्धंतरेहिं अमित्तेहिं जं किंचि असाहुदरं चिंतीअदि । इदो वरं देव्वो पमाणं त्ति" दाणिं वुण पआणाअ सव्वे वि सज्जीभविअ चिट्ठंति त्ति जणणी तुमं तुवरावेदि । पडिणिवट्टेहि,

गच्छम्ह । [एषा खलु चित्रशालामुखे सुलोचनया समं भर्तृदारिका तिष्ठति ।] [हंहो, आर्यकविराक्षससहितः महाराजोऽपि अत्र एव । भवतु, देव्याः नियोगं निवेदयामि] [भर्तृदारिके, भागानगरात् अस्माकं राज्ञः, वृत्तान्तस्समागतः "इदानीं इतो निर्गतस्य देवस्य महान् खलु कालस्संजातः । ततः खलु, लब्धान्तरैः अमित्रैः यत्किञ्चिदसाधुतरं चिन्त्यते । इतः परं देवः प्रमाणमि"ति । इदानीं पुनः प्रयाणाय सर्वेऽपि सज्जीभूय तिष्ठन्तीति जननी त्वां त्वरयते । प्रतिनिवर्तस्व, गच्छावः ।]

कविराक्षस :- एसा एव्व सा । [एषा एव सा]

[ कान्तिमतीमहाराजौ वैचित्र्यं नाटयतः ]

कान्तिमती :- (अपवार्य) सहि सुलोअणे, अह्माणं मणोरहणाडअस्स ईरिसं णिव्वहणं संपदं जादंत्ति मण्णेमि । [सखि सुलोचने, अस्माकं मनोरथनाटकस्य ईदृशं निर्वहणं सांप्रतं जातमिति मन्ये ।] (संस्कृतमाश्रित्य)

शशाङ्कः स्वच्छन्दं ग्लपयतु करव्याजदहनैः
असङ्कोचं क्रूरो मलयपवनोऽपि व्यथयतु ।
शरौघं कन्दर्पस्सपदि विकिरन्मां प्रहरतां
मया नूनं धैर्यं दृढतरमवष्टब्धमधुना ॥ -६६

किञ्च,

राज्ञः सत्वरमेव देशगमनं युक्तं प्रियं चाधुना
गन्तुं तेन सहैव हन्त जननी सम्मन्यते सादरम् ।
चापल्यादहमेव मन्मथशरैर्नीता दशामीदृशीं
कष्टं, किं कथयामि मय्युपनतं विस्फूर्जितं दुर्विधेः ॥
-६७

राजा :-

पुरतो विधाय बालां आशामुत्पाद्य तदनु हन्त विधे ।
पुनरपि तां विघटयता किं प्राप्तं साम्प्रतं भवता ॥ -६८

किञ्च,

गृहे वा सौधे वा पुनरपि सकृद्दृष्टपदवीं
उपेयादेषेति प्रमदभरितं मे ननु मनः ।
इदानीं तु प्रायः प्रशिथिलितमूलं विधिवशात्
समुत्कण्ठाभूम्ना भृशतरलमुद्वेगमयते ॥ -६९

*[ सुलोचना विषण्णा तिष्ठति ]*

कान्तिमती :- *( अपवार्य )* अइ सुलोअणे, किंति चिंतेसि ? । जीविदप्पच्चासं विसज्जिअ आलंब धीरत्तणं । [ अयि सुलोचने, किमिति चिन्तयसि ? । जीवितप्रत्याशां विसृज्य अवलम्बस्व धैर्यम् ]

**सुलोचना :-** सहि, एआरिसेहिं वअणेहिं करालकरवत्तेहिं विअ मह मम्माइ किंति किंतेसि ? [सखि, एतादृशैः वचनैः करालकरपत्रैरिव मम मर्माणि किमिति कृन्तसि ?]

**कान्तिमती :-** (स्वगतं, महाराजमुद्दिश्य) महाभाअ, एव्वंविहदुक्खाणुहवमेत्तप्फलो मह तुइ अणुराओ संवुत्तो। [महाभाग, एवंविधदुःखानुभवमात्रफलः मम त्वयि अनुरागस्संवृत्तः] (इति कानिचित्पदानि परिक्रामति)

**राजा :-** (स्वगतं)

मन्दं गच्छति तिष्ठति क्षणमथ व्यावर्तयत्याननं
दीना पश्यति लोचनान्तरगतं बाष्पं निरुन्धे ततः।
तामेनां बत सुन्दरीं मम कृते, प्राप्तामिमां दुर्दशां
पश्याम्येष कथं कठोरहृदयः, किं कर्तुमीशोऽथवा ॥ -७०

**सुलोचना :-** महाराअ, किंवि वअणं मह मुहादो ण णिग्गच्छइ। एत्तिअं वुण भणामि। देसंतरगदा वि मह पिअसही ण विसुमरणिज्जा। [महाराज, किमपि वचनं मम मुखान्न निर्गच्छति। एतावत्पुनः भणामि। देशान्तरगताऽपि मम प्रियसखी न विस्मरणीया]

राजा :-

विकसितकुवलयनयनां
पुष्करशरदिन्दुबिम्बशोभिमुखीम् ।
सततं हृदि निवसन्तीं
पश्यन् कमलाक्षि, विस्मरामि कथम् ॥ -७१

[ सुलोचना कान्तिमत्या चम्पकलतया च सह निष्क्रान्ता ]

राजा :- सखे, किमितः परं मन्यसे ?

कविराक्षस :- देसंतरं गच्छंतीए मह बहिणीए विजोएण अतिमेत्तं अप्पा पीडिज्जिस्सदित्ति मण्णेमि । किंअ, विमलकुलसंभवाए राअकण्णआए परिग्गहो भविस्सदित्ति कहिदवंतस्स णाअज्योदिसिअस्स समूलं उच्छेदव्वा जीहेत्ति । [ देशान्तरं गच्छन्त्याः मम भगिन्याः वियोगेन अतिमात्रं पिता पीडयिष्यतीति मन्ये । किंच, विमलकुलसम्भवायाः राजकन्यकायाः परिग्रहो भविष्यतीति कथितवतः नागज्योतिषिकस्य समूलं उच्छेत्तव्या जिह्वेति ]

राजा :- वयस्य, कृतं परिहासेन ।

कविराक्षस :- इदो वरं किं कादव्वंति कहेसि ? [ इतः परं किं कर्तव्यमिति कथयसि ]

राजा :- (तामनुसन्धाय)

इतो बाले दृष्टं तव वदनमम्भोरुहनिभं
परिघ्रातो वीटीरसपरिमलः सम्प्रति मया ।
श्रुतं किञ्चेदानीं अमृतरसनिष्यन्दि वचनं
मनो मे तत्प्राप्तुं किमिह पुनरन्वेति भवतीम् ॥ -७२

किञ्च,

चन्द्रातपव्यतिकरग्लपिताम्बुजाभं
प्रातस्तुषारकरबिम्बसमानशोभम् ।
बाष्पाम्बुपूरपरिपूरितलोचनान्तं
वक्त्रं तदेव हृदये परिवर्तते मे ॥ -७३

कविराक्षस :- किं विसादेण साहीअदि, उस्साहं एव्व ओलंबदु भवं। भणिदं खु पुढमकविणा वम्मीअसंभवेण – "उत्साहवन्तः पुरुषाः नाऽवसीदन्ति कर्मसु" त्ति । [ किं विषादेन साध्यते, उत्साहमेव अवलम्बतां भवान् । भणितं खलु प्रथमकविना वल्मीकसम्भवेन – "उत्साहवन्तः पुरुषाः नावसीदन्ति कर्मसु" इति ]

राजा :- केनोपायेन मयाऽवलम्बनीय उत्साहः ? । किञ्च, किमतः परं कर्म कर्तव्यमास्ते ।

कविराक्षस :- साहीणे वि कविरक्खसे किं उवाअस्स दरिद्दत्तणं ? [ स्वाधीनेऽपि कविराक्षसे किमुपायस्य दरिद्रत्वम् ? ]

राजा :- कोऽभ्युपायः ?

कविराक्षस :- अमच्चसुचित्तमुहादो एव्व समीकादव्वो सो अत्थो ।
[अमात्यसुचित्तमुखादेव समीकर्तव्यस्सोऽर्थः]

राजा :- स एव विदितार्थः क्रियताम् । अहं पुनः, अन्तःपुरं गच्छामि ।

(इति निष्क्रान्तौ)

॥ इति द्वितीयोंकः ॥

॥ रामाय नमः ॥

*

## ॥ अथ तृतीयोऽङ्कः ॥

[प्रविश्य चम्पकलता]

चम्पकलता :- (आकाशे) अयि तारावलीए, अवि जाणासि ! भट्टिदारिआ किं करेदित्ति । [अयि तारावलिके, अपि जानासि भर्तृदारिका किं करोतीति]

(प्रविश्य तारावलिका) किं भणामि, अज्जाणमंडवे सुलोअणाए समं परिअणकिदेहिं चंदणालेवहिं, जलसेअणतालविंतवीअणमुहेहिं उवसारेहिं पुणो वि पवुड्ढसंदावा, कुदोवि समाअदं अमच्चसुचित्तसंपेसिदं

वालमित्तकल्लाणजत्ताणिमित्तं किं वि पत्तं ओहारिअ, तंजाणअरगदं महाराअं सुलोअणामुहादो निसमिअ, अतिमेत्तं खिज्जंती चिट्ठइ। [किं भणामि। उद्यानमण्टपे सुलोचनया समं परिजनकृतैः चन्दनालेपैः, जलसेचनतालवृन्तवीजनमुखैः उपचारैः पुनरपि प्रवृद्धसन्तापा, कुतोऽपि समागतं अमात्यसुचित्तसंप्रेपितं बालमित्रकल्याणनिमित्तं किमपि पत्रं आहार्य, तज्जानगरगतं महाराजं सुलोचनामुखान्निशम्य, अतिमात्रं खिद्यती तिष्ठति।]

**चम्पकलता :-** हला, अह्माणं भट्टिदारिआए मणोरहनाडअस्स पच्चूहपरंपरा पदाआ विअ अग्गे पडिभाइ। [हला, अस्माकं भर्तृदारिकायाः मनोरथनाटकस्य प्रत्यूहपरम्परा पताका इव अग्रे प्रतिभाति]

**तारावलिका :-** सुट्ठु भणिदं होदीए [सुष्ठु भणितं भवत्या]

**चम्पकलता :-** सहि, अह्माणं रण्णो भाआणअरप्पआणसंरंभो केण पच्चूहिदो ?। [सखि, अस्माकं राज्ञः भागानगरप्रयाणसंरंभः केन प्रत्यूहितः ?]

**तारावलिका :-** अमच्चसुचित्तेण महाणुभाएण। [अमात्यसुचित्तेन महानुभावेन]

**चम्पकलता :-** कहं विअ ? [कथमिव]

**तारावलिका :-** भाआणअरसमीवदेसवत्तिणो महाराअपदकमलसोहाविहाविदकिरीडस्स रणहीरणामहेअस्स अंतवालस्स इमं वुत्तंतं अणुप्पेसिअ,

सव्वं समीकरेमि । ता तंजाणअरं समागदुअ, महाराएण अब्भणुण्णादो तदो सावआसं पडिट्ठेहिति । [भागानगरसमीपप्रदेशवर्तिनः महाराजपदकमलशोभाविभावितकिरीटस्य रणधीरनामधेयस्य इमं वृत्तान्तं अनुप्रेष्य सर्वं समीकरोमि । तस्मात्तञ्जानगरं समागत्य महाराजेन अभ्यनुज्ञातः, ततः सावकाशं प्रतिष्ठस्वेति । ]

चम्पकलता :- साहु सुचित्त साहु । असंघटणिज्जत्थसंघटणसमुत्थो तुह संरंभो । सहि, कंतिमदीए महाराअस्स अणुराओत्ति अमच्चसुचित्तो वि किं जाणादि ? । [साधु सुचित्त साधु । असङ्घटनीयार्थसङ्घटनसमर्थः तव संरम्भः । सखि, कान्तिमत्याः महाराजस्य च अनुरागोऽस्तीति अमात्यसुचित्तोऽपि किं जानाति ? ]

तारावल्लिका :- णहि णहि । [नहि नहि]

चम्पकलता :- ता किंति पच्चूहिदं तेण पआणं ? [तदा किमिति प्रत्यूहितं तेन प्रयाणम् ? ]

तारावल्लिका :- अय्यकविरक्खसेण राअनिओओ तस्स अणुप्पेसिदो भविस्सदि । [आर्यकविराक्षसेन राजनियोगः तस्य (तस्मै) अनुप्रेपितो भविष्यति ]

चम्पकलता :- सहि जुज्जइ, जुज्जइ । सो क्खु अत्थ सुत्तहारो । [सखि, युज्यते युज्यते, स खलु अत्र सूत्रधारः ]

तारावलिका :- तुमं कहिं दाणिं पत्थिदासि ? [त्वं कुत्रेदानीं प्रस्थितासि ]

चम्पकलता :- अह्माणं भग्गवसादो क्खु इमस्सिं देसे समागदो तुम्हे। ता दाणिं णिअकण्णआए पहावदीए विवाहमहूसवं पेक्खिदुं सिग्धं एव्व एत्थ आअंदव्वंत्ति, देवीए अग्गजेण चित्तसेणेण आमंतिदो राआ। भट्टिदारिआहिं कमलालयं गमिस्सदित्ति णिसमिअ, तं किंति विआरेदुं राअघरअं गच्छह्मि। [ "अस्माकं भाग्यवशात्खलु देशमिमं समागतस्त्वम्। तस्मात् इदानीं निजकन्यकायाः प्रभावत्याः विवाहमहोत्सवं प्रेक्षितुं शीघ्रमेव अत्र आगन्तव्यमि" ति देव्याः अग्रजेन चित्रसेनेन आमन्त्रितो राजा भर्तृणीभर्तृदारिकाभ्यां कमलालयं गमिष्यतीति निशम्य, तत् किमिति विचारयितुं राजगृहं गच्छामि ]

तारावलिका :- (सहर्षवितर्कं) जइ महाराअजत्ताणिमित्तं तं एव्व कल्लाणं एदं भवे, तदा भट्टिदारिआए महाराअदंसणं पुणो वि भवे। [यदि महाराजयात्रानिमित्तं तदेव कल्याणमिदं भवेत्, तदा भर्तृदारिकायाः महाराजदर्शनं पुनरपि भवेत् ]

चम्पकलता :- अलं असंबद्धमणोरहेहिं। सहि, जहजमीहिदं करेह्म। [अलं असंबद्धमनोरथैः। सखि, यथासमीहितं कुर्वः।]

( इति निष्क्रान्ते )

॥ प्रवेशकः ॥

[ ततः प्रविशति कमलालयगतः, चित्रसेनगृहारामे महाराजः वर्धनश्च ]

राजा :- दिष्ट्या सखे वर्धन वर्धसे। यतः —

वैवाहिकेन मणिमयभूषणजालेन भूषितमिदानीम् ।
त्वां दृष्ट्वा कुतुकमहं वाङ्मनसाऽतीतमभ्येमि ॥ -७४

वर्धनक :- सर्वमिदं भवत्कृपाकटाक्षमहिम्नः परिणामः ।

राजा :- सखे, कथय, कथमेतन्महोत्सवसङ्घटनम् ।

वर्धनक :- कथयामि, श्रूयताम् । पुरा खलु माथुरगृहीतराज्यं सेतुपतिं, भवदनुज्ञया प्रतिष्ठाप्य पुनः प्रतिनिवर्तमानः चण्डातपजिहीर्षया अस्मिन्नपि चम्पकविपिने समागत्य निषण्णवानस्मि । तदानीमेव पादचार्यादिनियमपुरस्सरं सेतुयात्रामुद्दिश्य सभार्यश्चित्रसेनः प्रभावत्या कन्ययाऽपि समं प्रातिष्ठत ।

राजा :- ततस्ततः ।

वर्धनक :- तदनन्तरमियं प्रभावती निदाघसन्तापसमाकुलिताऽवयवा, द्वित्रैरेव परिजनैः व्यवहितसकलस्वजना तत्रैव चम्पकविपिने समागतवती । ततः —

काञ्चीकल्पितकिङ्किणीकलरवालीढोपकण्ठा मुहु-
नीर्यन्निश्वसिताविलाधरदलकान्तिस्खलच्चङ्क्रमम् ।
घर्माम्भःपरिमृष्टपत्रतिलकं व्यालोलचेलाञ्चलम्
मन्दं मन्दमुपेत्य चम्पकतरोर्मूले निषण्णा प्रिया ॥
-७५

राजा :- ततस्ततः ।

वर्धनक :- तदनन्तरम् —

नीहाराम्बुकणान्विकीर्य परितो विस्रस्य कूर्पासकं
मायूरव्यजनैर्निवीज्य च शनैरालीभिराश्वासिता ।
दृश्याऽदृश्यकुचद्वया परिजनोत्सङ्गे शयाना ततः
दृष्टा शम्बरवैरिणो भगवतः क्रीडाशुकीवाऽङ्गना ॥
-७६

तदनन्तरं —

बाले सम्प्रति सुन्दरो ननु युवा कोप्येष मूले तरोः
तिष्ठत्यत्र विलोकयस्व सहसेत्यालीभिरुक्ता ततः ।
साकूतं सदृढानुरागमुदयद्रोमाञ्चमुल्लासिनी
दृष्ट्वा मामथ मान्मथं कमपि सम्मोहं मनस्यातनोत् ॥
-७७

अपि चेदानीमपि —

कान्ताकराग्रविधुतव्यजनाऽनिलेन
चेलाञ्चले विगलिते विशदे कुचाग्रे ।
तत्रैव दत्तनयनं समवेक्ष्य यन्मां
मन्दस्मितं मृगदृशो वलते तदन्तः ॥ -७८

तत्रान्तरे अकाण्डसमुत्थितचण्डसमीरणविधूयमानधाराधराऽभ्यन्तरविद्योतमानविद्युद्गणकपिशीकृतनानादिशामुखं युगपदुदितगगनतलमिलितजलधरपरिगलितधरणीधरशिखरनिकरनिपतितसलिलपतनसमयसमुदितझलझलनिनदमुखरितकन्दरान्तरं कोटरोदरपरिलीनसङ्कुचितशरीरसन्निवेशपतत्रिपतत्रसमाच्छादितशिशुशकुनिकदम्बकं विटपिविटपाग्रवर्तिपत्रपुटान्तरपरिगलितजलबिन्दुसन्दोहचटचटशब्दशब्दायमानकाननान्तमभिवर्षन्नदृश्यत नियमितनिदाघो नीलमेघः ।

राजा :- ततस्ततः ।

वर्धनकः :- तदनन्तरमहं तत्रैव विपिने कमपि मण्टपं प्राविशम् । सापि तदानीं स्वजनानागमनकातरहृदया तमेव मण्टपमागतवती । ततश्च पश्चिमाम्बुधिं प्रविष्टः चण्डभानुः । रजन्यपि तमिस्रा संवृत्ता । अथ च, लब्धावकाशाश्चोराः समागत्य निशीथे प्रविश्य तं मण्टपं, धनलोभेन, गृहीत्वा च बहुविधमणिभूषणभूषितां प्रभावतीं, केनचिदटवीमार्गेण पलायन्त ।

राजा :- कष्टं कष्टम्। ततस्ततः।

वर्धनक :- तदनन्तरं तस्यास्सखीजनः समागत्य, मत्समीपं, वचनमिद-मवोचत्। भो भो

महाभाग व्रज त्रातुं वयस्यां नः प्रभावतीम्।
गृहीत्वा निर्गताश्चोराः मार्गेणाऽनेन सम्प्रति॥ -७९

ततश्च निशम्य तासां वचनम् —

हस्ताग्रोदग्रखड्गप्रमथितनिपतच्चोरसङ्घातनृत्यत-
गात्रव्रातातिमात्रत्वरिततरसमुद्गच्छदस्त्रप्रवाहैः।
क्षोणिं चक्षुर्दुरीक्षामपि विपिनमिदं छन्नवृक्षं समन्तात्।
प्रत्यक्षं लक्षयित्वा क्षितिपतितनयारक्षकोऽस्मि क्षणेन॥
-८०

इत्यादिभिर्वचनैः समाश्वास्य च ताः, शार्दूललङ्घिताया इव हरिण्याः, तस्याः श्रवणदुस्सहैरार्तस्वरैः उन्नीय चोरमार्गं, धावं धावं तत्र गतः। तां नरेन्द्रकन्यकां, बिडालमुखान्तःप्रवेशसंप्राप्तदुर्गतिकामिव पर-भृतिकां, हिमजलसंसर्गमलिनामिव कमलिनीं, पयोधरागमाधिगत-तन्द्रिकामिव चन्द्रिकां, ग्रीष्मर्तुदुर्निरीक्षामिव वनलक्ष्मीं, मदगजास्कन्दन-विरसामिव सरसीं, अद्राक्षम्। ततश्च —

मुष्टीमुष्टि तलातलि बाहूबाहवि रणे मया निहतान्।
कतिचन दृष्ट्वा शेषाः बालां त्यक्त्वा पलायिताश्चोराः॥
-८१

राजा :- ततस्ततः ।

वर्धनकः :- तदनन्तरं

पङ्केरुहाक्षी प्रतिलब्धसंज्ञा
मामाहवे वीक्ष्य परिक्षताङ्गम् ।
संवीजयन्ती सिचयाञ्चलेन
स्वेदाम्बु संमृष्टवती करेण ॥ -८२

तदनु च मामचिरेणैव समागतचेतनं समवेक्ष्य, "महाभाग, जीवितदायिन्, मन्दभागिन्या मम कृते सुकुमारमिदं शरीरं परिश्रान्तिं नीतमिति तप्यते मे हृदयम्" । इति कथयन्त्या तया समाश्लिष्टो हृष्टतनूरुहः तदीयकराम्बुजमवलंब्यैव मन्दं मन्दं तमेव मण्टपमगाम् । ततश्च समागत्य तस्याः सखीजनः, "सखि प्रभावति, सम्प्रति भवत्या लाभेन जीवितमेव पुनः प्रतिपन्नाः स्मः इति मन्यामहे । अपि च, करगृहीतकन्दर्पां रतिमिव, भवतीं उद्वीक्ष्य भृशं वर्धामहे" इत्यवोचन् ।

राजा :- ततस्ततः

वर्धनकः : तदनु —

सन्नतमुखारविन्दं सासूयमिवाऽवलोक्य सा बाला ।
तैस्तैर्भावविशेषैः अवचनमेवाऽगदीन्मम प्रेम ॥ -८३

तत्रान्तरे कर्णपरम्परया कन्याऽपहरणं निशम्य, ससेनः चित्रसेनः समागत्य, सक्षेमां प्रभावतीमुद्वीक्ष्य, "केन महात्मना जीवद्वत्सोऽह-मिदानीमि"त्यभिधाय, "करगृहीतपाणिना महाभागेनाऽनेने"ति सखीवचनमुपशृण्वन्, समाश्लिष्य कन्यकामपि, "तथैवास्तु स्वयमाशंसनीयः खल्वयमर्थः" इति तद्वचनं समर्थयमानः, "जीवित-दायिन्, वयस्य वर्धन, कुतो भवान् अस्मिन्नवसर" इति पृष्टेन मया परिज्ञापितसकलवृत्तान्तः, तदानीमेव सन्तुष्टहृदयः, "यात्रायाः प्रतिनिवृत्तोऽहमिमां कन्यकां अलभवते प्रयच्छामी"ति प्रत्यजानीत। तदिदानीं प्रतिज्ञानिर्वाहाय मामाहूय कन्यां प्रदातुमुद्युङ्क्ते ।

**राजा :-** उपकर्तुस्तव प्रत्युपचिकीर्षुणा सम्यगाचारितमिदानीम् ।

**वर्धनक :-** सर्वमिदं भवत्कटाक्षभाजनतावैभवस्य प्रपञ्चः ।

**राजा :-** सखे, साधु सङ्घटितं दैवेन ।

(प्रविश्य पुरुषः)

**पुरुष :-** चित्रसेनो विज्ञापयति – कल्याणमण्टपमधिवसतु महाराजो वयस्यवर्धनेन सहे"ति ।

**वर्धनक :-** महाराज, किमितःपरमाज्ञाप्यते ? ।

**राजा :-** सखे, गच्छतु पुरतो भवान् । अहं तु अस्मिन् निष्कुटवने मुहूर्तमात्रं नानाविधमहीरुहविलोकनेन विनोदयन्नात्मानमिहैव निवसामि ।

**वर्धनक :-** यथा रोचते महाराजाय (इति निष्क्रान्तः)

राजा :- (परिक्रम्य, विचिन्त्य)

इन्दीवराम्बुरुहभृङ्गकुलप्रवाल-
रम्भाद्रुमस्तबकचाम्पकवीक्षणेन ।
तस्याः मुहुः प्रकृतिकोमलमङ्गमङ्गं
स्मृत्वा मनो विकृतिमेतितरां कठोरम् ॥ -८४

किञ्च, अमात्यमुचित्तमुखात् कथञ्चिदपि चित्रवर्मणो भागानगरप्रयाणं प्रत्यूहितमिति किञ्चिदिव समाश्वसतः मम, इदानीमवर्जनीयमिदं वर्धन-महोत्सवदर्शनाय प्रयाणमुपस्थितं भूयः । तदत्र, सर्वथा ममैव कृते सा मनोरथप्रियतमा भृशं परितप्यत इति न साधिष्ठमित्यात्मानं मन्ये । अपि च, समाश्वासनाय वयस्योऽपि नेदानीं पुरतस्सन्निधत्ते ।

(ततः प्रविशति कविराक्षसः)

कविराक्षस :- (सप्रहर्षं) अहो देव्वस्स अणुकूलत्तणं । एदं महंतं पिअं पिअवअस्सस्स कदा उण णिवेदेम्मित्ति घुरुघुराअदि मे जीहा । ता सो कहिं देट्ठव्वो । [अहो दैवस्य अनुकूलत्वम् । एतन्महत्प्रियं प्रियवयस्याय कदा पुनः निवेदयेयमिति घुरुघुरायते मे जिह्वा । तस्मात् सः कुत्र द्रष्टव्यः ? ] (स्मृतिमभिनीय) एव्वं खु भणिदं वअस्सवड्ढणेण, "विविहमहीरुहविलोकणेण अत्ताणं विणोदअंतो महाराओ चित्तसेणभवणारामे चिट्ठइ" त्ति । ता तहिं एव्व गच्छम्मि । [एवं खलु भणितं वयस्यवर्धनेन, "विविधमहीरुहविलोकनेन आत्मानं विनोदयन्महाराजः चित्रसेनभवनारामे तिष्ठती" ति । तस्मात् तत्रैव गच्छामि ।

( इति निष्कुटवनप्रवेशं नाटयित्वा, पुरो विलोक्य ) एसो खु खण-सारवइअरखुमुखुमाअंतचंदणद्दवाणुलित्तसअलंगो वलयीकिदणोमालि-आकुसुमदामसोहिदमणिबंधो रुक्खग्गे विहरंताणं विहंगमाणं विलासं पेक्खंतो एत्थ एव्व उवविसदि पिअवअस्सो । होदु, उवसप्पिस्सं [एष खलु घनसारवलयघुमुघुमायमानचन्दनद्रवानुलिप्त-सकलाङ्गः, वलयीकृतनवमालिकाकुसुमदामशोभितमणिबन्धः, वृक्षाग्रे विहरतां विहङ्गमानां विलासं प्रेक्षमाणः अत्र एव उपविशति प्रियवयस्यः । भवतु, उपसर्पिष्यामि] ( इत्युपसृत्य ) सत्थि होदु । [स्वस्ति भवतु]

राजा:- सखे, उपविश्यतामत्र ।

[ कविराक्षसः उपविशति ]

राजा :- केन निमित्तेन वयस्य, प्रसन्नमुखोऽसि ?

कविराक्षस :- अच्छब्भुदोवहारजुअललाहेण [अत्यद्भुतोपहार-युगललाभेन]

राजा :- ( सोत्कण्ठं ) सखे, किं तत् ? कथय ।

कविराक्षस :- इमस्सिं महूसवे मंततंतप्पहुदिकज्जाइ आअरिअस्स वाअणं तु सव्वं मह एव्वेत्ति, मए पत्थिदस्स वद्धणस्स सआसादो समीहिदवरलाहोत्ति मह एक्कं [अस्मिन्महोत्सवे मन्त्रतन्त्रप्रभृति-कार्याणि आचरतः, वायनं तु सर्वं मम एवेति, मया प्रस्थितस्य वर्धनस्य सकाशात् समीहितवरलाभ इति मम एकम्]

राजा :- (साशङ्कं) अथ, अपरं कस्य ?

कविराक्षस :- वअस्स, तुह एव्व। [वयस्य, तवैव]

राजा :- (सादरोत्कण्ठं) शृणुमस्तावत्।

कविराक्षस :- एत्थ एव्व तुह कंतिमदीसमाअमोत्ति। [अत्रैव तव कान्तिमतीसमागम इति]

राजा :- कृतं परिहासेन, भूतार्थं तु कथय।

कविराक्षस :- मए अलीअं वि, किं मंतीअदि ? णिअकण्णआविवाह-महस्सवदंसणाअ चित्तसेणेण बहिणीपदिचित्तवम्मा सकुडुंबपरिवारो एत्थ आणीदो। [मया अलीकं किं मन्त्र्यते ? निजकन्यकाविवाह-महोत्सवदर्शनाय, चित्रसेनेन भगिनीपतिश्चित्रवर्मा सकुटुम्ब-परिवारः अत्र आनीतः]

राजा :- (सविमर्शं) युक्तिक्षममिदं ते वचनम्। (सविस्मयहर्षकुतुकं) अपीदानीं क्व नु सा महाभागेति गृहीता वार्ता ?

कविराक्षस :- गहीदा एव्व। [गृहीता एव]

राज :- अभिधीयताम्।

कविराक्षस :- मह मग्गमज्झम्मि दिट्ठाए चेडीए चंपकलदाए, "भट्टि-दारिआ उक्कंठाविणोदणनिमित्तं एदं एव्व आरामं पविसिदुं उज्जुत्ता चिट्ठइ"त्ति भणिदं। [मम मार्गमध्ये दृष्टया चेट्या

चम्पकलतया, "भर्तृदारिका उत्कण्ठाविनोदननिमित्तं इम-
मेवाऽऽरामं प्रवेष्टुमुद्युक्ता तिष्ठती" ति भणितम् ]

राजा :- सखे, असम्भावितमप्यर्थं अचिरादनुभवन् परवानस्मि विस्मयेन ।
भवतु, तदन्विष्यावः ।

( इत्युत्थाय परिक्रामतः )

राजा :- सखे, दृश्यतामाराामरामणीयकम् । तथा हि —

पत्राभ्यन्तरवर्तिषट्पदशुकव्रातः समुत्पादय-
त्येकत्रैव महीरुहे दृढतरं जम्बूरसालभ्रमम् ।
किञ्च श्वेतकपोतसन्ततिसमाक्रान्तानिमान् शाखिनः
दृष्ट्वा नन्वपि पुण्डरीकतरवः सन्तीति सन्दिह्यते ॥
-८५

(अन्यतो दृष्ट्वा) विचित्रमत्र विलोक्यताम् ।

नदन्भूयो भृङ्गः प्रतिकुसुममादाय मधुरं
मरन्दं प्रेयस्यै वितरति, ततोऽयं तु पिबति ।

अहो, कुसुमायुधस्य सार्वत्रिकता । अथवा,

सुखं वा दुःखं वा स्वयमपि विभज्याऽनुभवताम्
कलत्राणां एवं कलयति को वा जनिमताम् ॥
-८६

अत्रेदमद्भुतमवधार्यताम् ।

छायावृक्षतले निवेश्य दयितां हंसः सरोभ्यन्तरात्
आनीयाऽर्पयति स्वयं कमलिनीनालानि तस्या मुखे ।
किञ्चाऽऽच्छिद्य रसालपल्लवमसौ निक्षिप्य वक्त्रे वधू-
निद्राया विरतिं प्रतीक्ष्य विटपिस्कन्धे पिको वर्तते ॥
-८७

कविराक्षस :- इमिणा किं पक्खिरुक्खप्पमुहदंसणेण । तदो तदो कंतिमदा अण्णिस्सह्म । [अनेन किं पक्षिवृक्षप्रमुखदर्शनेन । तत्र तत्र कान्तिमतीं अन्विष्यावः]

राजा :-

कूजत्कोकिलसङ्कुले वनतले न ज्ञायते तद्वचः
तन्मञ्जीररवोऽपि हंसनिवहोद्घुष्टे न निर्णीयते ।
तद्वक्त्राब्जपरीमलोऽपि नलिनाक्रान्ते न निर्धार्यते
कान्ता कान्तिमती ततः कथमिवेदानीं विचेया मया ॥
-८८

कविराक्षस :- (पुरो विलोक्य) पेक्ख, एदस्सिं पदेसे, चलण-विलुलित्तालत्तअद्दवा पदवी, काए वि इत्थिआए पविकट्टिदो पडिभाइ । [पश्य, एतस्मिन्प्रदेशे चरणविलुलिप्तालक्तकद्रवा पदवी, कयाऽपि स्त्रिया प्रवर्तिता प्रतिभाति]

राजा :- (निर्वर्ण्य) हन्त, तस्या एवाऽयम् ।

वक्षस्थले तरुणि ते चरणारविन्द-
संसक्तयावकपदं यदहं समीहे ।
धन्येन लब्धमिदमेव महीतलेन
किं वर्णयेऽहमपदे विधिचेष्टितानि ॥ -८९

(ततः परिक्रम्य) सखे, सर्वतो विचिन्वतो मम विलोचनचन्द्रिका न दृष्टिपथमारोहति सा ।

कविराक्षस :- मा उत्तम्म, उत्तम्म, जदो एदस्सिं लदामंदिरांतरे सुलोअणुस्संगे णिद्दं करंती चिट्ठइ कंतिमई । [सखे, मा उत्ताम्य, उत्ताम्य, यतः एतस्मिँल्लतामन्दिराभ्यन्तरे सुलोचनोत्सङ्गे निद्रां कुर्वती तिष्ठति कान्तिमती]

राजा :- (सहर्षसंभ्रमं, विलोक्य)

एकं नितम्बफलके विनिवेश्य बाहुं
अन्यं च वेष्टितमधः शिरसो निधाय ।
श्वासाऽनिलस्खलितमौक्तिकशोभिनासा
निद्राति सम्प्रति सुखं सरसीरुहाक्षी ॥ -९०

तदावां इमां विटपान्तरितौ पश्यावः । (इति तथा कुरुतः)

(ततः प्रविशति उत्स्वप्नायमाना सुलोचनोत्सङ्गे शयाना कान्तिमती)

कान्तिमती :- महाराअ, एक्कदारणीरदो तुमंत्ति जाणंतो मह गुरुअणो एदं तुह अणुराअवुत्तंत्तं कहं वि ण जाणादि। तुए वि देवीए भयेण इमस्सिं कज्जे को वि उवाओ ण चिंतीअदित्ति महंते संकडे पडिदह्मि। ता दाणिं वा लज्जं विसज्जिअ तुह समीव संपत्तव्वं। तुए वा देवीए सआसादो भअं उज्झिअ मह पाणिं गहीदव्वोत्ति दुव एव्व मग्गा दीसदी। [ महाराज, एकदारनिरतः त्वमिति जानन् मम गुरुजनः एतं तव अणुरागवृत्तान्तं कथमपि न जानाति। त्वयाऽपि देव्या भयेन अस्मिन्कार्ये कोऽपि उपायः न चिन्त्यते इति महति सङ्कटे पतिताऽस्मि। तस्मादिदानीं मया वा लज्जां विसृज्य तव समीपः सम्प्राप्तव्यः। त्वया वा देव्यास्सकाशाद्भयं उज्झित्वा मम पाणिः गृहितव्य-इति द्वावेव मार्गौ दृश्येते ]

राजा :- (सनिर्वेदं) उपयमपि असम्भावनापराहतमिव।

कविराक्षस :- देवीभयकादर वअस्स, सव्वं वि अवहिदो एव्व सुणादु भवं [ देवीभयकातर वयस्य, सर्वमपि अवहित एव शृणोतु भवान् ]

सुलोचना :- (आकाशे लक्ष्यं बद्ध्वा) महाराअ, किं करह्म। एदाए एआरिसिं सरीरावत्थं किंविअ, जाणंतेण होदा एव्वं उवेक्खीअदि जइ जाणासि तदा अतिमेत्तं णिक्करुणोसित्ति मण्णेमो। [ महाराज, किं कुर्मः। एतस्याः एतादृशीं शरीरावस्थां कामिव जानता

भवता एवं उपेक्ष्यते इति यदि जानामि, तदा अतिमात्रं निष्करुणोसीति मन्यामहे ]

राजा :- न सन्देहः ।

कान्ता ममैव सततं परिचिन्तनेन
 कन्दर्पकार्मुकवशं गमिता निकामम् ।
क्लेशं सुदुस्सहतरं सखि सङ्गतेति
 सोऽहं विदन्नकरुणो न कथं भवामि ॥ -९१

[ पुनरुत्स्वप्नायते कान्तिमती ]

कान्तिमती :- महाराअ, भुजजुअलेण दिढं मं परिसज्जेहिं ।
[ महाराज, भुजयुगलेन दृढं मां परिष्वजस्व ] ( इत्युच्चैः वदति )

कविराक्षस :- पूरेहि दाणिं मणोरहं एदाए । [ पूरयेदानीं मनोरथमेतस्याः ]

[ राजा उत्कण्ठापारवश्यं नाटयति ]

सुलोचना :- असंभावणिज्जमणरहे उट्ठेहिं सहि उट्ठेहिं । [ असंभावनीयमनोरथे, उत्तिष्ठ सखि, उत्तिष्ठ ] ( इति हसन्ती समन्तात् अवलोक्य, सचकितं हस्तेनोद्बोधयति )

कविराक्षस :- सविह गदो एव्व मह पिअवअस्सो । ता एत्थ किं असंभावणिज्जं । [ सविधगत एव मम प्रियवयस्यः । तस्मादत्र किं असंभावनीयम् ? ]

कान्तिमती :- (चक्षुषी उन्मील्य) सहि, किंति तुए हासो करीअदि ?
[सखि, किमिति त्वया हासः क्रियते]

सुलोचना :- तुह उसिविणिओ सुदेत्ति । [तव उत्स्वप्नः श्रुत इति]

कान्तिमती :- कीरिसो सो [कीदृशः सः]

[सुलोचना यथोक्तं कथयति]

कान्तिमती :- एदं वअणं विडवंतरिदो को वि सुणिस्सदित्ति वेवइ
विअ मे हिअअं। [एतद्वचनं विटपान्तरितः कोपि श्रोष्यतीति
वेपत इव मे हृदयम्]

[राजकविराक्षसौ सत्वरमुपसर्पतः]

कविराक्षस :- सुदं एव्व, सुदं एव्व अह्मेहिं । [श्रुतमेव, श्रुतमेव
आवाभ्यां]

[कान्तिमती सुलोचना च सविस्मयचकितमुत्तिष्ठतः]

सुलोचना :- (साश्चर्यं, जनान्तिकं) अतक्किदं एदं महाराअसंदंसणं,
मेहुग्गमं अन्तरेण एव्व कावि सुहा विट्ठित्ति मण्णेमि ।
[अतर्कितमेतन्महाराजसन्दर्शनम् । मेघोद्गममन्तरेण कापि
शुभा वृष्टिरिति मन्ये]

कान्तिमती :- (स्वगतं) असंभाविदेण इमिणा महाभाअदंसणेण कंवि
मोहं पडिवण्णह्मित्ति संकेदि मे हिअअं। [असम्भावितेन अनेन
महाभागदर्शनेन कमपि मोहं प्रतिपन्नाऽस्मीति शङ्कते मे
हृदयम्]

**कविराक्षस** :- वअस्स, बालमित्तकल्लाणदंसणणिमित्तं एत्थ समागदस्स तुह खदिररुक्खमूलगदस्स कविठ्ठफललाहो विअ तत्तहोदीए दंसणं संजादं। [वयस्य, बालमित्रकल्याणदर्शननिमित्तं अत्र समागतस्य तव, खदिरवृक्षमूलगतस्य कपित्थफललाभ इव तत्रभवत्याः दर्शनं सञ्जातम् ]

**कान्तिमतीसुलोचने** :- (सविमर्शं स्वगतं) महाराअजत्ताणिमित्तं तं एव्व कल्लाणं एदं जादं। ता अणुऊलत्तणे विहिणो, असंभाविद-सन्दोअसदथ्थओ एव्व। [महाराजयात्रानिमित्तं तदेव कल्याणमिदं जातम्। तस्मात् अनुकूलत्वे विधेः, असंभावित-सन्दोहसदर्था एव ]

**राजा** :- (कान्तिमतीं निरूप्य) —

शीर्यच्चम्पकसुन्दरं कचभरं संयच्छमाना सखी-
विन्यस्तस्तनकुम्भसीमविगलत्संव्यानमभ्युत्थिता।
साचीकृत्य दृगञ्चलं प्रियसखीपश्चात्प्रदेशं गता
लज्जानम्रमुखी मनो हरति मे मन्दस्मितं तन्वती॥
-९२

**सुलोचना** :- (उपसृत्य) जेदु महाराओ। [जयतु महाराजः]

**राजा** :- सखि, सुखमास्यते ?

**सुलोचना** :- (अपवार्य) सहि, महाराआअ जअवअणं किं ण प्पजुज्जइ। [सखि, महाराजाय जयवचनं किं न प्रयुज्यते]

कान्तिमती :- जेदु अय्य (इत्यर्धोक्ते, सलज्जं) जेदु महाभाओ।
[जयतु आर्य.... जयतु महाभागः।]

सुलोचना :- (विहस्य) दिवसदुअणंतरं कहणिज्जे अत्थे दाणिं किंति लज्जेसि। [दिवसद्वयानन्तरकथनीये अर्थे किमिति लज्जसे]

राजा :- तरुणि, त्वन्मुखकमलादिदमेव वचनमखण्डं उपश्रोतुं उत्कण्ठते मे हृदयम्।

सुलोचना :- एदाए जीविदेण समं एव्व उवट्ठिदं पआणं कहं वि अमच्चसुचित्तेण पच्चूहिदं। तदो वरं देव्वजोएण एत्थ आअमणं संजादं। दाणिं वि एदस्सिं लदामंदिरंतरे मेलनं, इदो वरं किं भविस्सदित्ति ण जाणीअदि। ता दअं कादुं अअं एव्व ओसरो। [एतस्याः जीवितेन सममेवोपस्थितं प्रयाणं कथमपि अमात्यसुचित्तेन प्रत्यूहितम्। ततः परं दैवयोगेन अत्रागमनं सञ्जातं। इदानीमपि एतस्मिल्लँतामन्दिराभ्यन्तरे मेलनम्। इतः परं किं भविष्यतीति न ज्ञायते। तस्माद्दयां कर्तुमयमेवाऽवसरः]

कविराक्षस :- लज्जं विसज्जिअ महाराअसमीवं संप्पत्तव्वंत्ति पुव्वभणिदं सच्चं करेदु पिअसही। [लज्जां विसृज्य महाराजसमीपः सम्प्राप्तव्य इति पूर्वभणितं सत्यं करोतु प्रियसखी]

(कान्तिमती लज्जां नाटयति)

सुलोचना :- (सस्मितं) ऊसुविणाइदं ग्खु त्तं । [उत्स्वप्नायितं खलु तत्]

कविराक्षस :- पुडमवासणापरिणामो ग्खु सिविणिओ णाम । [प्रथमवासनापरिणामः खलु स्वप्नो नाम]

कान्तिमती :- (सभ्रूभङ्गं) अइ, अय्यकविरक्खसस्स वअणं पुणो वि किं वड्ढावेहि ? [अयि, आर्यकविराक्षसस्य वचनं पुनरपि किं वर्धयसि ? ] अण्णदो ओसर । [अन्यतः अपसर]

कविराक्षस :- अइ सुलोअणे, ओसरत्ति भणंदी एसा अह्माणं अवत्थाणं णाणुमण्णेदि । एहि गच्छह्म । [अयि सुलोचने, अपसरेति भणन्ती एषा आवयोरवस्थानं नानुमन्यते । एहि, गच्छावः ]

(इति कतिचित्पदानि अपसर्पतः)

कान्तिमती :- सहि, एआइणीं मं विसज्जिअ कहिं गच्छसि ! [सखि, एकाकिनीं मां विसृज्य कुत्र गच्छसि ]

सुलोचना :- सहि, किं कादव्वं । अय्यकविरक्खसो मं गण्हिअ गच्छइ । [सखि, किं कर्तव्यम् । आर्यकविराक्षसः मां गृहीत्वा गच्छति । ]

कविराक्षस :- अइ सुलोअणे सुलोअणेत्ति किं भणसि ? इदो वरं महाराअभवणं गच्छंतीं तुमं किं एसा अणुस्सदित्ति मण्णेसि ? ।

[ "अयि सुलोचने, सुलोचने," इति किं भणसि । इतः परं महाराजभवनं गच्छन्तीं त्वां किमेषा अनुसरिष्यतीति मन्यसे ? ]

( इति सुलोचनया निष्क्रान्तः )

कान्तिमती :- सहि, अहं वि आअच्छम्मि । खणमेत्तं चिट्ठदु होदी
[ सखि, अहमपि आगच्छामि । क्षणमात्रं तिष्ठतु भवती ]

( इति बहिर्गन्तुमुद्युङ्क्ते )

राजा :- ( निरुध्य ) तरुणि, रहसि मिलिताऽपि किमिति न सुखयसि ?

कान्तिमती :- ( सलज्जं ) किं कादव्वं ? । [ किं कर्तव्यम् ]

राजा :- अस्मिन्प्रसूनशयने मुहूर्तमात्रमुपविश्यताम् ।

कान्तिमती :- देवी इमं वुत्तंत्तं सोदूण मह जणणीए कुप्पिस्सदित्ति वेवइ मे हिअअं । [ देवी इमं वृत्तान्तं श्रुत्वा मम जनन्यै कुपिष्यतीति वेपते मे हृदयम् ]

राजा :-

त्वमिह रहसि स्थित्वा देव्या बिभेषि कुतोऽधुना
तरलहृदये मौढ्यं त्यक्त्वा सरोजदलास्तरे ।
सुखमुपविश, स्वैरं सँल्लप्यतां मधुरं त्वया
कुचभरपरीरम्भारंभोप्यसावनुमन्यताम् ॥ -९३

( इति चेलाञ्चलं गृहीत्वा, कान्तिमतीमुपवेश्य )

का 11

ममान्तिके सम्प्रति याचितं प्रिये,
त्वया दृढालिङ्गनमम्बुजेक्षणे ।
अवश्यदेयं खलु तत्समागतं
भवेत्प्रतिज्ञा विफला ममाऽन्यथा ॥ -९४

**कान्तिमती :-** (सलज्जस्मितं) किदसमयवंधेहिं तुम्हेहिं किंति मइ दाणिं आरोविअदि । [**कृतसमयबन्धेन त्वया किमिति मयि इदानीमरोप्यते**]

**राजा :-** यद्येवं, तर्हि सुलोचना पृच्छयताम् ।

**कान्तिमती :-** सावि तुम्हाणं पक्खवादिणी एव्व । [**मापि तव पक्षपातिनी एव**]

**राजा :-** आस्तामेवम् । परन्तु सम्प्रति याचतां वितर मे परिरम्भम् ।

**कान्तिमती :-** "याचंतेण जणेण जं वि पुछिछदं तं ओसिअं वितरज्जंत्ति" ण मए पडिण्णादं । [**याचता जनेन यः पृष्टः, सः अवश्यं वितरणीय इति न मया प्रतिज्ञातम्**]

**राजा :-** नैतावता निषेधस्याऽयं समयः ।

सम्प्रति शम्बरवैरी दलयति मर्माणि सायकैर्निशितैः ।
दत्वा दृढपरिरम्भं कवचितमचिरेण कलय मां बाले ॥
-९५

(इत्यालिङ्गनं नाटयति)

कान्तिमती :- (स्पर्शसुखमभिनीय) चंदमणित्थंभसरिसविब्भमेहिं महाराअस्स भुजेहिं परिरद्धा अहं परितोवेट्ठिदसुखस्सवंतीजलमज्झगदं विअ अत्ताणं मण्णेमि ।। [चन्द्रमणिस्तम्भसदृशविभ्रमाभ्यां महाराजस्य भुजाभ्यां परिरब्धा अहं परितोवेष्टितसुधास्रवन्ती-मध्यगतं इव आत्मानं मन्ये] (स्तनतटं विमृश्य) महाराअस्स णहक्केण मुद्दिदाए वि मह गुरुअणदंसणसंभावणाए समुत्तरलं हिअअं । [महाराजस्य नखक्कैः मुद्रिताया अपि मम गुरुजनदर्शनसम्भावनया समुत्तरलं हृदयम् ।]

राजा :-

अस्याः कठोरकुचकुम्भदृढोपगूहैः
स्वेदाम्बुलिप्तमुदयत्पुलकं ममाङ्गम् ।
जीमूतमुक्तनववारिकणाऽभिषिक्तं
उद्भिन्नकोरकमुपस्कुरुते कदम्बम् ॥ -९६

(नायिकां निर्वर्ण्य) अहो जितं मौग्ध्येन ।

व्यापारतो निषेधितं अभिमतमभिलाषतस्तु परिरम्भम् ।
एषा सरोरुहाक्षी लज्जाभूम्ना भृशं परिष्कुरुते ॥ -९७

[नेपथ्ये दुन्दुभिघोषः]

राजा :- (आकर्ण्य) वयस्यवर्धनपाणिग्रहमहोत्सवारंभाय प्रवर्तितो माङ्गलिकदुन्दुभिघोषः ।

कान्तिमती : (स्वगतं) पुढमालिंगणावसरे एदं णिमित्तं जादं त्ति मणरहसिध्धिसंभावणाए अतिमेत्तं मुदिदंह्मि । [प्रथमालिङ्गनावसरे एतन्निमित्तं जातमिति मनोरथसिद्धिसम्भावनया आतिमात्रं मुदिताऽस्मि]

[नेपथ्ये]

परित्तायह परित्तायह, एसो, अय्यकविरक्खसो चंपअमहीरुहसिहरं समारुहिअ कुसुमाइ अवचिण्णंतो महीदले निपदिदो विसंण्णो चिट्ठइ । [परित्रायत, परित्रायत, एषः आर्यकविराक्षसः चम्पकमहीरुहशिखरं समारुह्य, कुसुमानि अवचिन्वन् महीतले निपतितः विषण्णास्तिष्ठति]

[राजा कान्तिमती च सम्भ्रान्तौ तिष्ठतः]

कान्तिमती :- अय्यउत्त, परित्ताएहि जीविअसंसआवसरे चिट्ठंतं पिअवअस्सं । [आर्यपुत्र, परित्रायस्व जीवितसंशयावसरे तिष्ठन्तं प्रियवयस्यम्]

राजा :- सर्वतः प्रमादी दुष्टवटुः (इति निर्गन्तुमिच्छति)

कान्तिमती :- अणथ्थकारिणी सुलोअणा संवुत्ता, जदो एदाए उघ्घोसेण घरअभ्भंतरवट्टिणो जणा, सव्वे वि एथ्थ लदामंदिरसमीवे संपत्ता । महाराअ, इमादो संकटादो मं परित्ताएहि ।

[अनर्थकारिणी सुलोचना संवृत्ता, यतः एतस्या उद्घोषेण गृहाभ्यन्तरवर्तिनः जनास्सर्वेऽपि अत्र लतामन्दिरसमीपं संप्राप्ताः। महाराज, अस्मात्सङ्कटात् मां परित्रायस्व ]

राजा :- अयि बाले, किं कर्तव्यमितः। यद्भावि तद्भवतु। पश्य, मुग्धाक्षि, चित्रवर्मप्रमुखास्सर्वे लतागृहद्वारे आगत्य निपतितं तं सङ्गीभूयाऽत्र पश्यन्ति।

कान्तिमती :- (विलोक्य) अह्महे, एक्कपदं मिलिदा क्खु एदे सव्वे वि। हद्धि, हद्धि, इत्थिआए हिअअस्स चंचलत्तणं। [हंहो, एकत्र पदे मिलिताः खलु एते सर्वेऽपि। हा धिक् हा धिक् स्त्रियाः हृदयस्य चञ्चलत्वम्।] (इति लज्जाभयपरवशा तिष्ठति)

राजा :- अइ, समाश्वसिहि, समाश्वसिहि, चिन्तित एवाऽभ्युपायः।

कान्तिमती :- कहेहि, कहेहि। कथय, कथय]

(इति पादयोः पतति)

राजा :- (हस्ताभ्यामुद्गृह्णन्)

विन्यस्येदं कण्ठभूषान्तराले
रत्नं स्वस्याऽदृश्यताहेतुभूतम्।
त्यक्तत्रासा स्वैरमम्भोजनेत्रे
मन्दं मन्दं मन्दिराऽन्तः प्रयाहि ॥ -९८

(इति रत्नं ग्रैवेयकान्तः निदधाति)

(कान्तिमती रत्नग्रहणं नाटयति)

राजा :- अहो, कियद्वैभवमस्य मणेः ।

मुखाम्बुजपरीमलो मृगदृशः परिघ्रायते
मुखं तु न च दृश्यते कनककुण्डलाऽलङ्कृतम् ॥
क्वनत्कनककङ्कणव्यतिकरस्वनः श्रूयते
कराम्बुजयुगं पुनर्न च कथञ्चिदालक्ष्यते ॥-९९

कान्तिमती :- सुमरिणिज्जो अअं जणो [स्मरणीयोऽयं जनः]

(इति निष्क्रान्ता)

राजा :- हन्त, स्वजनविपत्तिविक्षेपो हृदयस्य । य एष प्रिया-विश्लेषखेदमप्यभिभवति । (इति निश्वस्य) किं जातो वयस्यः इति न ज्ञायते ।

(नेपथ्ये)

चंदणालेवहिमजलसेअणतालविंतवीअणमुहेहिं उवआरेहिं दिट्ठिआ समूसादिदो अय्यकविरक्खसो । [चन्दनालेपहिमजलसेचन-तालवृन्तवीजनमुखैः उपचारैः दिष्ट्या समाश्वासितः आर्य-कविराक्षसः]

राजा :- ( आकर्ण्य सहर्षं )

सहसा दैवयोगेन, दक्षिणं बाहुं सम्प्रति प्रतिष्ठितं मन्ये।

किञ्च,

समीहितकार्यसंघटनमप्यर्धपतितं विधिना पुनरुद्धृतमिव ॥

-१००

भवतु, समीपमुपसृत्य वयस्यं सम्भावयामि।

( इति निष्क्रान्तः )

॥ इति तृतीयोऽङ्कः ॥

*

## ॥ अथ चतुर्थोऽङ्कः ॥

[ ततः प्रविशति सुलोचना ]

सुलोचना :- कंतिमदीमहाराआणं लदामंदिरंतरवुत्तंतस्सवणेण पज्जवट्ठाविदो मह अप्पा। किं अ, तारिसरअणप्पदाणेण कहं उवकिदं रण्णा वि। अहो, अच्चिंतिदब्भुदवैहवो क्खु देव्वस्स विलासो। ( परितो विलोक्य ) एसा तारावलिआ ससंभमं कहिं गच्छइ। होदु। पुच्छिस्सं। ( इत्युपसृत्य ) अइ तारावलिए संभंता तुमं कहिं गच्छसि ?। [कान्तिमतीमहाराजयोः लता- मन्दिरान्तरवृत्तान्तश्रवणेन प्रत्यवस्थापितो मम पिता। किंच,

तादृशरत्नप्रदानेन कथमुपकृतं राज्ञाऽपि। अहो, अचिन्तितादद्भुतवैभवः खलु दैवस्य विलासः। (परितो विलोक्य) एषा तारावलिका ससंभ्रमं कुत्र गच्छति ?। भवतु। प्रक्ष्यामि। (इत्युपसृत्य) अयि तारावलिके, सम्भ्रान्ता त्वं कुत्र गच्छसि ?]

(प्रविश्य तारावलिका)

तारावलिका :- भट्टिदारिआए अणुप्पेसिदा, तुह समीवं एव्व आअच्छम्मि। [भर्तृदारिकया अनुप्रेपिता, तव समीपमेव आगच्छामि]

सुलोचना :- (साशङ्कं) किं णिमित्तं ? [किं निमित्तं ?]

तारावलिका :- वड्ढणमहूस्सवाणंतरं महाराओ णिअभवणं गदोत्ति किं जाणासि ? [वर्धनमहोत्सवानन्तरं महाराजः निजभवनं गतः इति किं जानासि ? ]

सुलोचना :- सहि, जाणामि। [सखि, जानामि]

तारावलिका :- तदो भवणब्भंतरे भट्टिदारिआए, वक्खोरुहजुअले मअरिआपत्तअं लिहंती अहं अवट्ठिदह्मि। तस्सिं ओसरे हठादो तथ्थ आगदाए देवीए, ताए वक्खत्तले णक्खक्खादाइं दठ्ठूण, "अइ वस्से कहं जादासि" त्ति पुछिछदं। [ततः भवनाभ्यन्तरे भर्तृदारिकायाः वक्षोरुहयुगले मकरपत्रिकां लिखन्ती अहमवस्थिताऽस्मि। तस्मिन्नवसरे हठात्तत्र आगतया देव्या,

तस्या वक्षस्स्थले नखक्षतानि दृष्ट्वा, "अयि वत्से, कथं जाताऽसी" ति पृष्टम् । ]

सुलोचना :- (सोद्वेगं) घट्टकुडीए पहादं सव्वुत्तं । तदो ।
[ घट्टकुड्या प्रभातं संवृत्तम् । ततः ]

तारावलिका :- तदो लज्जसज्झसथंभमधरिदसरीराए, वेवंदीए किं कादव्वदामूढाए भट्टिदारिआए किं वि ण कहिदं । [ ततः लज्जासाऽध्वससंभ्रमधृतशरीरया वेपमानया किं कर्तव्यतामूढया भर्तृदारिकया न किमपि कथितम् ]

सुलोचना :- तदो तदो [ ततस्ततः ]

तारावलिका :- पच्चा, "अइ तारावलिए, तुए भणिदव्वं" त्ति कहिदाए मए "किं वि ण जाणामी" त्ति भणिदं । तदो "जइ जीविदपच्चासा तुह, ता कहेहि" त्ति देवीए वअणं सोदूण सव्वो वि वुत्तंतो मए साविदो । [ पश्चात् "अयि तारावलिके, त्वया भणितव्यमि" ति कथितया मया, "किमपि न जानामी" ति भणितम् । ततः, "यदि जीवितप्रत्याशा तव, तदा कथये" ति देव्या वचनं श्रुत्वा सर्वोऽपि वृत्तान्तः मया श्रावितः ]

सुलोचना :- साहु जादं [ साधु जातं ]

तारावलिका :- तदो लज्जावणदमुहिं णअणंतरगलंतवाहप्पचयं दीहदरणीसाससमाकुलिआहरविम्बं भट्टिदारिअं दट्ठूण वच्छ्ल्लाणुकंपा

विद्दुदहिआ "अण्णदा एव्व किं चि भट्टिणे भणिअ, महाराअस्स पडिपादणिज्जा एसे" ति कहिअ, अंतेवुरं गदा । ततः लज्जावनतमुखीं नयनान्तरगलत्प्रवाहप्रचयां दीर्घतरनिश्वाससमाकुलिताऽधरविम्बां भर्तृदारिकां दृष्ट्वा वत्सानुकम्पा विद्रुतहृदया, "अन्यदा एव किंचिद्भर्त्रे भणित्वा, महाराजाय प्रतिपादनीया एषे" ति कथयित्वा अन्तःपुरं गता ।

**सुलोचना** :- साहु चिंतिदं जणणीए, किंतु महाराओ अ देवीए अणुमदिं अंतरेण दुदियापडिग्गहं मण्णेदि वा ण वेत्ति संकेदि मे हिअअं। [साधु चिन्तितं जनन्या, किन्तु महाराजश्च देव्याः अनुमतिमन्तरेण द्वितीयापरिग्रहं मान्येत वा न वेति शङ्कते मे हृदयम् ।

**तारावलिका** :- "साहीणवल्लहा देवि" त्ति पंडिदपामरसाहारणं खु एदं वअणं। [" स्वाधीनवल्लभा देवी" ति पण्डितपामर-साधारणं खल्वेतद्वचनम् ।

**सुलोचना** :- किं वा भविस्सदित्ति ण जाणीअदि। [किं वा भविष्यतीति न ज्ञायते ।

**तारावलिका** :- सहि सुलोअणे, भट्टिदारिआ तुवरावेदि। एहि, गच्छम्ह। [सखि सुलोचने, भर्तृदारिका त्वरयति। एहि, गच्छावः ।

( इति निष्क्रान्ते )

## ॥ प्रवेशकः ॥

[ततः प्रविशति कान्तिमती]

कान्तिमती :- (विचिन्त्य) सुलोअणं आणेदुं अणुप्पेसिदा तारावलिआ किं दाणिं वि णाअदा ? [सुलोचनां आनेतुं अनुप्रेषिता तारावलिका किमिदानीमपि नाऽऽगता]

(प्रविश्य सुलोचना)

सुलोचना :- (पुरो विलोक्य) एसा पिअसही वख्खोरुहावट्ठिदाइ णख्खख्खदाइ णिण्णिमेसं पेख्खिंदी परोहंतपुलआ संम्मुध्धहिअआ एआइणी एथ्थ एव्व चिट्ठइ। होदु, पच्चप्पदेसे चिट्ठंदी एदाए विब्भमं सव्वं वि पेख्खिस्सं। [एषा प्रियसखी, वक्षोरुहाव-स्थितानि नखक्षतानि निर्निमेषं पश्यन्ती प्ररोहत्पुलका सम्मुग्धहृदया एकाकिनी अत्रैव तिष्ठति। भवतु, पश्चात्प्रदेशे तिष्ठन्ती एतस्याः विभ्रमं सर्वमपि प्रेक्ष्ये।]

(इति पश्चाद्भागे तिष्ठति)

कान्तिमती :- महाराअ, कुंतलभरं मुंचेहिं मुंचेहिं। [महाराज, कुन्तलभरं मुञ्च, मुञ्च]

सुलोचना :- णूणं झाणलएण पुरो कप्पिदं महाराअं उद्दिसिअ एसा एव्वं भणादि। [नूनं ध्यानलयेन पुरः कल्पितं महाराजं उद्दिश्य एषा एवं भणति]

कान्तिमती :- णाह, वक्खत्थले, हत्थं किंति पसारेसि ? । [नाथ, वक्षस्स्थले हस्तं किमिति प्रसारयसि] (इति स्वस्तिकां बद्ध्वा, परितः चक्षुषी प्रसार्य) महाराओ कहिं दाणिं ? [महाराजः कुत्रेदानीम् ?]

सुलोचना :- णिअमंदिरे [निजमन्दिरे] (इति उपसृत्य) सहि, लज्जं विसज्जिअ, किंति एव्वं कहेसि । जइ जणणी विअ, अण्णा जा कावि आगदुअ एदं वुत्तंतं जाणिस्सदि, तदो किं करिस्सदि होदी । [सखि, लज्जां विसृज्य किमित्येवं कथयसि ? यदि जननीव अन्या कापि आगत्यैतं वृत्तान्तं ज्ञास्यति, तदा किं करिष्यति भवती]

कान्तिमती :- (सलज्जं) मम्महहदओ एव्व एत्थ उवालंभणिज्जो । [मन्मथहतक एवात्र उपालम्भनीयः]

सुलोचना :- किंति तुए अहं आहूदह्मि ? [किमिति त्वयाहमाहूताऽस्मि]

सुलोचना :- किंचि कहिदव्वंत्ति । [किञ्चित्कथनीयमिति]

सुलोचना :- किं तं कहेहि । [किं तत्कथय]

कान्तिमती :- अइ सुलोअणे, अणणुभूदणाहपरिस्संगा कहं वि अहं वि एत्तिअं कालं जीविदमेत्तपरिसेसा, पज्जवट्ठाविदह्मि । अज्ज उण सविसेसपरिस्संगसुहाणुहवेण एक्को वि णिमेसो मह जुअ-

सहस्सायदि । ता, किं करेमि । किं अ, हिअअचवलत्तणं सव्वं वि मह अज्झए परिण्णादंत्ति लज्जए संकुच्चंति विअ सव्वाइ अंगाइ । अवि अ, तस्स महाणुहावस्स मह वि एक्कंदथ्थले मेलणं इदो वरं ण संभोदित्ति, मं अणुज्झिदकम्मुओ मम्महो, पहरंतो एव्व चिट्ठिस्सदित्ति भणोमि । अण्णं अ. गजेंदकंदराहिरूढमहाराअ-मुहचंदसंदस्सणाणंदरसंजादसंदावसंदानपरिसोसिदं, मणसिअकरदल-विलसिद कुंडली किद कम्मुअमज्झपरिगलिदसरणिअरवइअरसमुट्ठिददहण-ज्जालजालपरित्तं गिम्हइदुविजिम्भमाणदिणणाहमयूहसंदोहसंतत्तं विअ वणदलं, आअम्भिअजलहरणिवहपरिमुत्तवरिसीसारेण विअ, महाराअभुजजुअलपरिस्संगसोक्खेण समुज्जीविदं वि पुणो दंसणासंभवणाए समुत्तरलं मे हिअअं । (इति क्षणं विचिन्त्य) मम्महसुंदरेण महाराएण जइ संगदा ण होम्मि, तदा केवलं पुडवीए अहं भागं एव्वेत्ति भणोमि । [अयि सुलोचने, अननुभूतनाथ-परिष्वङ्गा कथमपि अहमपि इयन्तं कालं जीवितमात्रपरिशेषा प्रत्यवस्थापिताऽस्मि । अद्य पुनः सविशेषपरिष्वङ्गसुखानुभवेन एकोऽपि निमेषः मम युगसहस्रायते । तस्मात्किं करोमि । किंच, हृदयचपलत्वं सर्वमपि मम अम्बया परिज्ञातमिति लज्जया सङ्कुचन्तीव सर्वाणि अङ्गानि । अपि च, तस्य महानुभावस्य ममापि एकान्तस्थले मेलनं इतःपरं न संभवेदिति मां अनुज्झितकार्मुको मन्मथः प्रहरन्नेव, स्थास्यतीति मन्ये । अन्यच्च, गजेन्द्रकन्धराधिरूढमहाराजमुखचन्द्रसन्दर्शनानन्तर-

सञ्जातसन्तापसन्तानपरिशोषितं, मनसिजकरतलविलसितकुण्डली-कृतकार्मुकमध्यपरिगलितशरनिकरवलयसमुत्थितदहनज्वाला-जालपरितप्तं, ग्रीष्मर्तु विजृम्भमाणदिननाथमयूखसन्दोहसन्तप्तं इव धनतलं, आकस्मिकजलधरनिवहपरिमुक्तवर्षासारेण इव, महा-राजभुजयुगलपरिष्वङ्गस्वर्गेण समुज्जीवितमपि, पुनः दर्शनाऽस-म्भावनया समुत्तरलं मे हृदयम् । मन्मथसुन्दरेण महाराजेन यदि सङ्गता न भवामि, तदा केवलं पृथिव्या अहं भार एवेति मन्ये ]

**सुलोचना :-** तेण वि तुइ किदाणुराएण महाराएण, एव्वं एव्व कहीअदि । [तेनापि त्वयि कृतानुरागेण महाराजेन, एवमेव कथ्यते ]

**कान्तिमती :-** मइ सो अणुरत्तोत्ति तुह मुहादो एव्व सुणीअदि । [मयि सः अनुरक्त इति तव मुखादेव श्रूयते ]

**सुलोचना :-** लदामंदिरंतरे तस्स चरिदं किं तुए विसुमरिदं ? । [लतामन्दिरान्तरे तस्य चरितं किं त्वया विस्मृतम् ?]

**कान्तिमती :-** "केवललीलापरा क्खु राआणो" त्ति तेण वि ण मे वीसासो । ["केवललीलापराः खलु राजानः" इति तेनापि न मे विश्वासः ]

**सुलोचना :-** सो महाणुहावो लदामंदिरंतरवुत्तंतं पुणो पुणो सुमरंतो अतिमेत्तं उत्तम्मइ । किंअ, तुइ संकंतहिअअं उज्झिद-णिद्दाहारवावारं विसपंडरेण सरीरेण विडंबअंतं विअ चंदचूडं,

विरहाणलसंदावमलिणचंदणप्पंसुपरिधूसरेहिं अंगेहिं, अणुकरंतं विअ लच्छीरमणं दट्ठूण संकमाणमाणसाए देवीए "किं णिमित्तं अय्यवुत्तो एव्वंविहो दीसइ" त्ति पुच्छिदेण अय्यकविरक्खसेण, कंतिमदीए महाराअस्स अणुराओत्ति अहं ण जाणामित्ति अण्णहण्णहा किंचि भणिदं सोदूण कुविदाए णिब्भच्छिदो समाकुलिदो चिट्ठइ। तुमं वुण एव्वं कहेसि। किं करेमि। [स महानुभावः लता-मन्दिरान्तरवृत्तान्तं पुनः पुनः स्मरन् अतिमात्रं उत्ताम्यति। किञ्च, त्वयि सङ्क्रान्तहृदयं उज्झितनिद्राहारव्यवहारं विसपाण्डुरेण शरीरेण विडम्बयन्तमिव चन्द्रचूडं, विरहानलसन्तापमलिन-चन्दनपांसुपरिधूसरैः अङ्गैः अनुकुर्वन्तमिव लक्ष्मीरमणं, दृष्ट्वा शङ्कमानमानसया देव्या "किं निमित्तं आर्यपुत्रः एवंविधो दृश्यते" इति पृष्टेन आर्यकविराक्षसेण, कान्तिमत्यां महाराजस्य अनुरागाऽस्ति इति अहं न जानामीति अन्यान्यथा किञ्चिद्भणितं, श्रुत्वा कुपितया निर्भर्त्सितः समाकुलितस्तिष्ठति। त्वं पुनः एवं कथयसि। किं करोमि।]

कान्तिमती :- सहि, संघडणकज्जस्स, अय्यकविरक्खसो भंडस्स विअ दंडो, अणुऊलो, पडिऊलो अ (सविषादकरुणं) महाणुहावस्स तस्स एआरिसदुक्खाणुहवणिमित्तं अहं णिम्मिदह्मि विहिणा। [सखि, सङ्घटनकार्यस्य आर्यकविराक्षसः, भाण्डस्येव दण्डः, अनुकूलः प्रतिकूलश्च। महानुभावस्य तस्य एतादृशदुःखानुभवनिमित्तं अहं निर्मिताऽस्मि विधिना]

**सुलोचना** :- सहि, जणणीए चिंदिदस्स अत्थस्स किं दाणिं रण्णा समारंभो करीअदि ? । [सखि, जनन्या चिन्तितस्य अर्थस्य किमिदानीं राज्ञा समारम्भः क्रियते ? ]

**कान्तिमती** :- तादो किं करेदित्ति जाणिदुं अत्थाणीमण्डअं अणुप्पहिदा चंपअलदा, इदो एव्व आअच्छइ । [तातः किं कुर्यादिति ज्ञातुमास्थानीमण्डपमनुप्रहिता चम्पकलता इत एवाऽऽगच्छति]

( प्रविश्य चम्पकलता )

**चम्पकलता** :- भट्टिदारिए, अमच्चसुचित्तेण किं वि मंतअंतो चिट्ठइ भट्टा । [भर्तृदारिके, अमात्यसुचित्तेन किमपि मन्त्रयमाणः तिष्ठति भर्ता ]

**सुलोचना** :- पकिदं विसज्जिअ किं भवे । किंतु, देवीए अणुमदिं अंतरेण महाराओ दुदीयापरिग्गहं ण मण्णेदित्ति अय्यकविरक्खसेण भणिदं । तह वि एत्थ किं संविहाणं अमच्चसुचित्तेण आणीअदित्ति ण जाणीअदि । [प्रकृतं विसृज्य किमन्यद्भवेत् । किन्तु देव्या अनुमतिमन्तरेण महाराजः द्वितीयापरिग्रहं न मानयेदिति आर्यकविराक्षसेन भणितम् । तथापि अत्र किं संविधानं अमात्यसुचित्तेन आज्ञाप्यत इति न ज्ञायते ]

**कान्तिमती** :- ( सखेदं ) किं तह भणिदं अय्यकविरक्खसेण ? [ किं तथा भणितं आर्यकविराक्षसेन ? ]

**सुलोचना** :- अह किं । [अथ किं ]

कान्तिमती :- ता दाणिं जीवदणिरासंह्मि संवुत्ता । (इति मोहं नाटयित्वा) अइ सुलोअणे, लदामंदिरंतरे मिच्छाणुराएण महाराएण केत्तिअं विलसिदं । हद्धि हद्धि, मह मुद्धत्तणं । अह्महे, "अविस्ससणिज्जा राआणोत्ति" एत्तिअं कालं मए ण परिण्णादं । हा हदह्मि । (इति सुलोचनामाश्लिष्य) सहि, उज्झिदा जीविदप्पच्चासा मए दाणिं । हंजे चंपकलदे, बालभावादो पहुदि संवढ्ढिदं कीरसिसुं णाणाफलेहिं मं विअ परित्ताएहि । अइ सुलोअणे मह किदे अण्णारिसेण आआसेण तुए अप्पा अतिमेत्तं पीडिदो । मह वुण मंदहाइणीए तेण महानुहावेण समाअमो दुल्लहो जादो । किं अ, तुए अय्यकविरख्खसमुहादो एदं पत्तं तस्स सविहं णेदव्वं (इति पत्रं विलिख्य वाचयति) (संस्कृतमाश्रित्य)

[तस्मादिदानीं जीवितनिराशाऽस्मि संवृत्ता । (मोहं नाटयित्वा) अयि सुलोचने, लतामन्दिरान्तरे मिथ्यानुरागेण महाराजेन कियद्विलसितम् । हा धिक् हा धिक् मम मुग्धत्वं । हंहो, "अविश्वसनीया राजान" इति इयन्तं कालं मया न परिज्ञातम् । हा हताऽस्मि । (सुलोचनामाश्लिष्य) सखि, उज्झिता जीवितप्रत्याशा मयेदानीम् । हंजे, चम्पकलते, बालभावात्प्रभृति संवर्धितं, कीरशिशुं नानाफलैरिव, मां परित्रायस्व । अयि सुलोचने, मम कृते अन्यादृशेन आयासेन तव अप्पा अतिमात्रं पीडितः । मम पुनः मन्दभागिन्याः तेन महानुभावेन समागमः दुर्लभो जातः । किञ्च, त्वया, आर्यकविराक्षसमुखात्

इदं पत्रं तस्य सविधं नेतव्यम्। (इति पत्रं विलिख्य, वाचयति, संस्कृतमाश्रित्य)

प्रकटीकृतो मयि विभो भवता मिथ्यानुरागबन्धोऽयम्।
तेनैव जीवितास्म्यहं एतत्समयावधि इति विज्ञेयम्॥
-१०१

किञ्च,

भवदसमागमविरचितवपुरौदासीन्यजातकीर्तिमयीम्।
आसाद्य तनुमितोऽन्यां अचिरेणैवाऽहमपनयामि रुजम्॥
-१०२

अइ, एदं गह्ण, [अयि एतद् गृहाण] (इति तस्या हस्ते पत्रं समर्पयति)

(सुलोचना सत्रार्प्यं गृहीत्वा चेलाञ्चले बध्नाति)

**कान्तिमती :-** हा, देवि जणणि, तुह मुहं पेक्खिदुं लज्जेमि। ता एत्थं एव्व चिट्ठंति भणामि। इदो वरं कंतिमदीए कण्णआए लोअजत्ता उवरदेत्ति जाणीहि। हा, ताद कंतिमदीजीविदप्पिअ, पिअं अप्पिअं वि दुअं संसारस्स साहाविअं एव्व। ता अहं तुए ण सोचणिज्जा। [हा, देवि जननि, तव मुखं प्रेक्षितुं लज्जे। तस्मादत्रैव तिष्ठन्ती भणामि। इतः परं कान्तिमत्याः कन्यकायाः लोकयात्रा उपरतेति जानीहि। हा, तात,

कान्तिमतीजीवितप्रिय, प्रियमप्रियमपि द्वयं संसारस्य स्वाभाविकमेव। तस्मादहं त्वया न शोचनीया]

सुलोचना :- सहि, एत्तिअं भणिदुं किं जादं दाणिं। अमच्चसुचित्तस्स रण्णो वि मंतणअं सुमिणिअ तदो एव्वं भणादु होदी। [सखि, एतावद्भणितुं किं जातमिदानीम्। अमात्यसुचित्तस्य राज्ञोऽपि मन्त्रनयं श्रुत्वा, ततः एवं भणतु भवती]

कान्तिमती :- सहि, महाराअचित्ताणुसारेण अमच्चसुचित्तो वि भणादि। [सखि, महाराजचित्तानुसारेण अमात्यसुचित्तोऽपि भणति]

सुलोचना :- जं किंचि होदु। खणमेत्तं ओलंब जीविदं। [यत्किञ्चिद्भवतु। क्षणमात्रं अवलम्बस्व जीवितम्]

कान्तिमती :- ता एदं रअणं गह्णिअ अत्थाणीमंडवं गता, ताणं मंतं सोढूण, सिग्घं एव्व आअच्छ। [तस्मादिदं रत्नं गृहीत्वा, आस्थानीमण्टपं गता, तयोः मन्त्रं श्रुत्वा शीघ्रमेवाऽऽगच्छ]

(इति तस्या हस्ते रत्नं समर्पयति)

सुलोचना :- तहेत्ति [तथेति] (रत्नं गृहीत्वा निष्कान्ता)

कान्तिमती :- अइ चंपकलदे, सुवअणाणामहेअं देवण्णकिरादिं सिग्घं उवणेहि [अयि चम्पकलते, सुवचनानामधेयां दैवज्ञकिरातीं शीघ्रमुपनय]

चम्पकलता :- तहेत्ति [ तथेति ] ( निष्क्रम्य, किरात्या सह पुनःप्रविशति )

किराती :- कुसलं होदु होदीए [ कुशलं भवतु भवत्याः ]

कान्तिमती :- एत्थ उवविस [ अत्र उपविश ]

( किराती उपविशति )

कान्तिमती :- अइ, जं किंचि दाणिं चिंतिदं । तं सिझ्झइ वा ण वेत्ति कहेहि [ अयि, यत्किञ्चिदिदानीं चिन्तितम् तत् सिद्ध्यति वा न वेति कथय ]

किराती :- अइ, कुलदेवतपत्थने कदुअ तदा भणामि । ता पूजाणिमित्ते सोणकुसुमाइ, दुहुलजुअले अ उवणेहि । [ अयि कुलदेवताप्रार्थनां कृत्वा ततः भणामि । तस्मात्पूजानिमित्ताय स्वर्णकुसुमानि, दुकूलयुगलं च उपनय ]

चम्पकलता :- (स्वगतं) अइ, जं किंचि होदी भणादु । संपदं वुण कुलदेवदाराहणावदेसेण तुह आअमणं सहलं जादं । [ अयि, यत्किञ्चिद्भवती भणतु । साम्प्रतं पुनः कुलदेवताराधना-पदेशेन तवागमनं सफलं जातम् ]

कान्तिमती :- एदाइ कुसुमाइ, एदं अ दुऊलजुअलं । [ एतानि कुसुमानि, एतच्च दुकूलयुगलम् ] ( इति पुरः निक्षिपति )

किराती :- ( ध्यानं नाटयित्वा, ससंशयं ) सिझ्झइ विअ । [ सिद्ध्यतीव ]

कान्तिमती :- किं संदिध्वं विअ भणासि । [किं सन्दिग्धमिव भणसि]

किराती :- अह इं [अथ किं]

कान्तिमती : किं णिमित्तं ? [किं निमित्तम ?]

किराती :- महंते पच्चूहे लक्खीअदि । [महान् प्रत्यूहः लक्ष्यते]

( कान्तिमती विपण्णा तिष्ठति )

चम्पकलता :- एदाए वअणं सच्चं कदुअ किं विसण्णासि ? इणरूवेण एदं गण्णिअ गच्छदु एसा [एतस्या वचनं सत्यं कृत्वा किं विपण्णाऽसि ? ऋणरूपेणेदं गृहीत्वा गच्छतु एषा ]

किराती :- ताए वअणे किं शुणासि । देवीए पत्थणेण णिप्पच्चूहे फलिस्सदि ते मणोलहे । [तस्या वचनं किं शृणोषि ? देव्याः प्रार्थनया निष्प्रत्यूहः फलिष्यति ते मनोरथः]

कान्तिमती :- जीविदणिमित्तं देविं अहं ण पत्थेमि । [जीवित-निमित्तं देवीं अहं न प्रार्थये]

चम्पकलता :- ( स्वगतं ) देवदामाणुसीणं साहारणं एदं वअणं । ( प्रकाशं ) का सा देवी ? [देवतामानुषीणां साधारणं एतद्वचनम् का सा देवी ?]

किराती :- लाअशेहरवलालोहा एव्व । [ राजशेखरत्वरारोहा एव ]

चम्पकलता :- राअसेहरस्स महाराअस्स भट्टिणीं किं भणासि ? [ राजशेखरस्य महाराजस्य भट्टिनीं किं भणसि ]

किराती :- णहि णहि । शंदकलावदंसस्स कुडंबिणीं कमलंबिअं । [ न हि, न हि चन्द्रकलावतंसस्य कुटुम्बिनीं कमलाम्बिकाम् ]

कान्तिमती :- ( स्वगतं ) अण्णं एव्व एदं । [ अन्यदेवैतत् ] ( प्रकाशं ) जइ एव्वं ता दाणिं एव्व पत्थेमि । [ यद्येवं, तदिदानीमेव प्रार्थये । ]

किराती :- सहि, अणुजाणीहि मं । [ सखि, अनुजानीहि मां ]

कान्तिमती :- दिण्णा एव्व अब्भणुण्णा । [ दत्ता एवाऽभ्यनुज्ञा ]

किराती :- सत्थि होदीए । [ स्वस्ति भवत्यै ]

( इति निष्क्रान्ता )

कान्तिमती :- ( शिरस्यञ्जलिं बद्ध्वा )

कमलालयपुरणिलए
विअसिदकंदोट्टमसिणणअणंते ।
णिप्पच्चूहं दाणिं
मणरहसिध्धिं करेहि मे सिध्धे ॥ १०३

[कमलालयपुरनिलये
विकसितकुन्दोद्दामसितनयनान्ते ।
निष्प्रत्यूहं इदानीं
मनोरथसिद्धिं कुरु मे शीघ्रम् ]

( संस्कृतमाश्रित्य )

निर्दग्धोऽपि शिवेन शम्बररिपुर्भूयस्त्वयोज्जीवितः
सर्वान्पीडयतीति पातकमिदं त्वय्येव सम्पद्यते ।
तन्निर्विघ्नमभीप्सितस्य सहसा साफल्यमातन्वती
त्रायम्वाऽम्ब तुषारशैलतनये वीथीविटङ्कप्रिये ॥ -१०४

( नेपथ्ये )

सफलो दे मणोरहो । [सफलस्ते मनोरथः]

कान्तिमती :- (सहर्षविस्मयं) देवदाए विअ पडिवअणं । हंजे का एव्वं वाहरदि ? [देवताया इव प्रतिवचनं, हञ्जे कैवं व्याहरति ]

चम्पकलता :- सुलोअणाए सरो विअ सुणीअदि : [सुलोचनायाः स्वर इव श्रूयते । ]

कान्तिमती :- अइ सुलोअणे, कहिं चिट्ठसि ? सविहं एहि, किं तुए सुदं ताणं मंतणं । [अयि सुलोचने, कुत्र तिष्ठसि ? सविधमेहि । किं त्वया श्रुतं तयोर्मन्त्रणम् ]

[ सुलोचना प्रविश्य शिरः कम्पयति ]

**कान्तिमती** :- अइ, दूरदो एव्व किं चिट्ठसि ? [अयि, दूरत एव किं तिष्ठसि ?]

**सुलोचना** :- अइ, समीवं आअदंह्मि । दिण्णं अ मए उत्तरं शिरक्कंपणेण । [अयि, समीपमागताऽस्मि । दत्तं च मयोत्तरं शिरःकम्पनेन ]

**कान्तिमती** :- किं एदं अच्चरिअं । सद्दो सुणीअदि । सा वुण ण दीसइ । (इति विचिन्त्य, विहस्य) अइ मुद्धे, विसज्जिअ रअणं भणाहि । [किमेतदाश्चर्यम् . शब्दः श्रूयते. सा पुनः न दृश्यते । अयि मुग्धे, विसृज्य रत्नं, भण ]

**सुलोचना** :- अइ विसुमरिदं । [अयि विस्मृतं]

(इति रत्नं ग्रैवेयकान्निस्सारयति)

**कान्तिमती** :-- सहि तत्थ को वुत्तंतो ? सखि, तत्र को वृत्तान्तः ]

**सुलोचना** :– "अह्माणं कण्णआ कंतिमदी रदिसरिसरूवा सोहणगुणसालीणी महाराअं अंतरेण अण्णं पुरुसं सिविणए वि ण सुमरेमित्ति पडिजाणंती चिट्ठइ । ता ताए पाणिं जह गण्णिस्सदि महाराओ, तह तुह्मेहिं यदिदव्वं" ति, अह्माणं रण्णा भणिदं । तदो "देवीए अणुमदिं अंतरेण महाराओ एदं अत्थं सव्वहा णाणुमण्णेदि" त्ति सुचित्तस्स वअणं सोदूण, "असंवहणिज्जत्थ सघ्घडणसमत्थो खु तुह्माणं संकप्पो । ता कहं वि मह मणोरहो

महत्तो कादम्बो" त्ति सहत्थग्गाहं पत्थिदेण अमच्चसुचित्तेण मअवहा साहीअदित्ति पडिण्णादं । ["अस्माकं कन्यका कान्तिमती रतिसदृशरूपिणी शोभनगुणशालिनी महाराजमन्तरेण अन्यं पुरुषं स्वप्नेऽपि न स्मरामीति प्रतिजानती तिष्ठति। तस्मात् तस्याः पाणिं यथा ग्रहीष्यति महाराजः तथा त्वया यतितव्यमि" ति अस्माकं राज्ञा भणितम् । ततः, "देव्या अनुमतिमन्तरेण महाराजः इममर्थं सर्वथा नाऽनुमन्येत" इति अमात्यसुचित्तस्य वचनं श्रुत्वा, "असंभवनीयार्थसङ्घटनसमर्थः खलु तव सङ्कल्पः तस्मात्कथञ्चित् मम मनोरथः सफलः कर्तव्यः इति सहस्तग्राहं प्रार्थितेन अमात्यसुचित्तेन, "सर्वथा साधीयत"-इति प्रतिज्ञातम् ]

कान्तिमती :- साहु अमच्चसुचित्त साहु। महाराअस्संघडणेण एदाए मअणवेअणाए मं परिपालिअन्तो तुमं संक्खातिअंबओ एव्वेत्ति मण्णेमि। [साधु अमात्यसुचित्त साधु। महाराजसंघटनेन एतस्याः मदनवेदनायाः मां परिपालयन् त्वं साक्षात्त्रियम्बक एवेति मन्ये]

सुलोचना :- (सहर्षवितर्कं) सुट्ठु भणिदं होदीए। मए मण्णीअदि संपदं फलिदो दे मणोरहोत्ति। जदो सव्वप्पआरभट्टहिदेसिणो तस्स वअणं ण लंघेदि महाराओ। [सुष्ठु भणितं भवत्या। मया मन्यते साम्प्रतं फलितस्ते मनोरथ इति। यतः सर्वप्रकारभर्तृहितैषिणः तस्य वचनं न लङ्घेत महाराजः]

कान्तिमती :– किं दाणिं वि ता तथ्थ एव्व मन्तएंता चिट्ठंति ? [किमिदानीमपि तौ तत्रैव मन्त्रयमाणौ तिष्ठतः]

सुलोचना :– इमं वुत्तंतं महाराअस्स भणिदुं सुचित्तो राजघरअं गदो। अह्माणं राआ वुण देवीए पिअणिवेदणाअ अंतेवुरं। [इमं वृत्तान्तं महाराजाय भणितुं सुचित्तः राजगृहं गतः। अस्माकं राजा पुनः देव्यै प्रियनिवेदनाय अन्तःपुरम्]

कान्तिमती :- एव्वं विअ आसासिदं तुमं एव्व कहेसित्ति संकेदि मे हिअअं। [एवमिवाश्वासं त्वमेव कथयसीति शङ्कते मे हृदयम्]

सुलोचना :- तं वि अइरादो एव्व पगडीभविस्सदि। [सोऽपि अचिरादेव प्रकटीभविष्यति]

(प्रविश्य प्रतिहारी)

प्रतिहारी :- भट्टिदारिए, तुह विवाहमहूसवसंरंभो महंतो रण्णा करिअदि। ता तुमं वैवाहिएहिं भूसणेहिं अलंकादुं सिग्घं एव्व अअच्छत्ति देवी भणादि। एहि, गच्छह्म। [भर्तृदारिके, तव विवाहमहोत्सवसंरम्भः महान् राज्ञा कार्यते। तस्मात्त्वं वैवाहिकैः भूषणैरलंकर्तुं शीघ्रमेव आगच्छेति देवी भणति। एहि, गच्छावः।]

सुलोचना :- दाणिं वा मह वअणं सच्चं मण्णेसि ? [इदानीं वा मम वचनं सत्यं मन्यसे ?]

कान्तिमती :- (सस्मितं) सहि, एहि, गच्छम्ह । [सखि, एहि, गच्छावः]

(इति निष्क्रान्तास्सर्वे)

॥ इति चतुर्थोऽङ्कः ॥

॥ रामाय नमः ॥

*

## ॥ अथ पञ्चमोऽङ्कः ॥

[ततः प्रविशति चेटीद्वयम्]

एका :- हला, किं दाणिं सुलोअणा विसण्णमुही दीसइ । [हला, किमिदानीं सुलोचना विषण्णमुखी दृश्यते]

अन्या :- (निश्वस्य) तं किंति कहेमि । [तत् किमिति कथयामि]

एका :- (सोद्वेगं) किं जादं ? कहेहि । [किं जातं ? कथय]

अन्या :- अज्ज गहिदपत्तो वीहीमज्झम्मि गच्छंतो अय्यकविरक्खसो पच्चप्पदेसे सिग्घं आवदंतं मदगअं दट्ठूण कंपंतोरुजुअलो हत्थगलिदपत्तो अहो निपदिदो । [अद्य, गृहीतपत्रः वीथीमध्ये गच्छन् आर्यकविराक्षसः पश्चात्प्रदेशे शीघ्रमागच्छन्तं मदगजं दृष्ट्वा कम्पमनोरुयुगलः हस्तगलितपत्रः अहो निपतितः]

एका :- अच्चाहिदं अच्चाहिदं । तदो तदो । [अत्याहित-मत्याहितम् । ततस्ततः । ]

अन्या :- तदो सो जाणुहिं एव्व कहं कहं वि कस्स वि घरअस्स देहलिं संपत्तो । [ततस्सः जानुभ्यामेव कथं कथमपि कस्यापि गृहस्य देहलीं सम्प्राप्तः ]

एका :- चिरजीवी होदु अय्यकविरक्खसो । [चीरञ्जीवी भवतु आर्यकविराक्षसः ]

अन्या :- तदाणिं एव्व तेण रणमत्तणामहेएण मदगएण तं पत्तं करे घेत्तूण गअणमज्झम्मि उस्सारिदं महाराअभट्टिणीए सोहग्गे णिपदिदं आसित्ति कविरक्खसमुहादो सुणिअ ताए हत्थगदं तं भविस्सदित्ति संकमाणमाणसा विसण्णमुही चिट्ठइ सुलोअणा । [तदानीमेव तेन रणमत्तनामधेयेन मदगजेन, तत्पत्रं करे गृहीत्वा, गगनमध्ये उत्सरितं, महाराजभट्टिन्याः सौधाग्रे निपतितमासीदिति कविराक्षसमुखात् श्रुत्वा, तस्याः हस्तगतं तद्भविष्यतीति शङ्कमानमानसा विषण्णमुखी तिष्ठति सुलोचना ]

एका :- (अङ्गुलिं चिबुके विन्यस्य) अम्महे, कित्तिअं देव्वस्स दुव्विलसिदं । भट्टिदारिआए, महाराअपुढमदंसणप्पहुदि पच्चूहस्स उवरि पच्चूहो वट्टइ । [हंहो, कियद्दैवस्य दुर्विलसितम् । भर्तृदारिकायाः महाराजप्रथमदर्शनात्प्रभृति प्रत्यूहस्य उपरि प्रत्यूहः वर्धते ]

अन्या :- किं जाणासि, अह्माणं रायिणो समक्खं किदप्पडिण्णस्स अमच्चसुचित्तस्स को वुत्तंतोत्ति। [किं जानासि, अस्माकं राज्ञः समक्षं कृतप्रतिज्ञस्य अमात्यसुचितस्य को वृत्तान्त इति]

एका :- णाअजोदिसिअस्स कण्णे किं वि मंतिअ उक्कंठाविणोदण-णिमित्तं उववणे चिट्ठंतस्स महाराअस्स पवुत्तिं अण्णिम्संतो गदो। [नागज्योतिषिकस्य कर्णे किमपि मन्त्रयित्वा उत्कण्ठाविनोदन-निमित्तं उपवने तिष्ठतः महाराजस्य प्रवृत्तिं आज्ञापयन् गतः]

अन्या :- जइ सुलोअणाए तक्किदं सच्चं भवे तदा सुचितेण वा णाअजोदिसिएण वा किं कादव्वं। [यदि सुलोचनया तर्कितं सत्यं भवेत्तदा सुचित्तेन वा नागज्योतिषकेन वा किं कर्तव्यम्]

एका :- सव्वहा कमलंबिआ भअवदी भट्टिदारिआए सरणं [सर्वथा कमलाम्बिका भगवती भर्तृदारिकायाः शरणम्]

अन्या :- इमं वुत्तंतं सुणिअ भट्टिदारिआ, अतिमेत्तं उत्तम्मिस्सइ। ता, एहि, ताए समीवं गच्छह्म। [इमं वृत्तान्तं श्रुत्वा भर्तृदारिका अतिमात्रं उत्तमिष्यति। तस्मादेहि, तस्यास्समीपं गच्छावः]

(इति निष्क्रान्ते)

## ॥ प्रवेशकः ॥

[ ततः प्रविशति उपवनगतो, विरहावस्थां नाटयन् राजा ]

राजा :- (सनिश्वासं)

कान्ताया मयि चन्द्रकान्तशिशिरैः दोर्वल्लरीविभ्रमैः
सोल्लासे कुचकुम्भघट्टनभवद्रोमाञ्चवक्षस्स्थले ।
योऽसावावहदानुकूल्यमधुना निष्कारणं निर्घृणं
कष्टं कष्टमयं पटीरपवनः प्रत्यङ्गमास्कन्दति ॥

-१०५

किञ्च,

विलिप्तः प्रत्यङ्गं शशिरसघनश्चन्दनरसः
गृहीतः पर्यङ्कः सरसिजदलैरेव रचितः ।
श्रिता हर्म्याग्रेषु प्रतिनिशमघर्मांशुकिरणाः
न सन्तापः शान्तः तदपि बत वृद्धिं च भजते ॥

-१०६

अपि च,

जगति विदितं चापल्यं मे भवत्प्रसभं वधू-
परिणयविधौ तं चोद्वीक्षे कथं सुहृदं नृपम् ।
इति मयि मुहुश्चिन्तासन्तत्यभिव्यथिते दृढं
प्रहरति मनोजन्मा मर्माणि मे निशितैश्शरैः ॥

-१०७

अन्यच्च,

रहसि सुदृशस्तस्या भूयो न मेलनसम्भवः
परिणयकथामेषा देवी न जात्वनुमन्यते ।
नृपतिसविधे कन्यां वाचा स्वयं च न याचितुं
स्पृहयति मनस्तन्मे पारिप्लवत्वमचञ्चलम् ॥-१०८

तदद्य, भगवती कमलाम्बिका नः शरणम् । (शिरस्यञ्जलिं बद्ध्वा)

वीथीविटङ्कदयिते मातः प्रालेयभूधरतनूजे ।
सुदृशा मां घटयन्ती साधय सहसा मनोरथमिदानीम् ॥
-१०९

(इति कमलाम्बिकां प्रार्थयमानस्तिष्ठति)

(नेपथ्ये)

जइ एदं वुत्तंतं पिअवयस्सो सुणिस्सदि तदो मं कुपिस्सदि ।
[यदि इमं वृत्तान्तं प्रियवयस्यः श्रोष्यति तदा मां कुपिष्यति]

राजा :- (आकर्ण्य) कमप्यनर्थं विधाय वयस्यः बिभ्यत् इत-
एवाऽभिवर्तते ।

[ततः प्रविशति कविराक्षसः]

कविराक्षस :- जेदु पिअवअस्सो । [जयतु प्रियवयस्यः]

राजा :- सखे, किं विषण्णमुखोऽसि ? किमाचरितं भवता ?

कविराक्षस :- मए किं वि ण किदं । किंतु, रणमत्तेण मदगएण ।
[मया किमपि न कृतम् । किन्तु, रणमत्तेन मदगजेन]

राजा :- (साश्चर्यं) सखे, किमेतदभिधेहि विस्पष्टम् ।

[कविराक्षसः वृत्तं सर्वं कथयति]

राजा :- (सरोषोद्वेगं) सर्वतः प्रमादिन्, वयस्य, गृहीतपत्र एव गृहाभ्यन्तरं किमिति न गतोऽसि ?

कविराक्षस :- (स्वगतं) तारिसं साहसं कादुं, किं आगदुअ मे पदिदं । (प्रकाशं) जीविदसंसआवसरे पत्तकहाए, को अवसासो ।
[तादृशं साहसं कर्तुं किमागत्य मे पतितम् । जीवितसंशयावसरे पत्रकथायाः कोऽवकाशः]

राजा :- (सकरुणं)

तामेव पङ्कजमुखीमनिशं विचिन्त्य
निष्पीडितस्य मदनज्वरवेगतो मे ।
आश्वासकं किमपि सम्प्रति सम्भवेद्वा
कष्टं, कष्टम् ।
दैवेन तद्विघटितं गजकैतवेन ॥ -११०

कविराक्षस :- ण केवलं एदं । किंतु, पत्तगदत्थपरिसीलणेण काएवि इत्थिआए तुमं अणुरत्तोत्ति तक्कअंती, दूसहामरिसपरवसा

दाणिं एव्व एत्थ आगदुअ तुमं कुप्पिस्सदि देवी । [न केवलमेतत् । किन्तु पत्रगतार्थपरिशीलनेन कस्यामपि स्त्रियां त्वमनुरक्त इति तर्कयन्ती, दुस्सहामर्षपरवशा, इदानीं एवात्र आगत्य कुपिष्यति त्वां देवी]

राजा :- एवमनाश्वासयन् खिन्नमेव मां किमिति खेदयसे भूयः ।

कविराक्षस :- आस्सासणं खु सव्वं वि रणमत्तेण अवहरिदं ।
[आश्वासनं खलु सर्वमपि रणमत्तेन अपहृतम् ]

( ततः प्रविशति गृहीतशुका ससखीजना देवी )

देवी :- सहि सोहवदि, तुह हत्थे कहं एदं पत्तं संपत्तं ?
[सखि शोभावति, तव हस्ते कथमिदं पत्रं सम्प्राप्तम् ]

शोभावती :- वीहीमज्झादो रणमत्तेण मदगएण धूलीहिं स्समं करेण उक्खित्तं, सोहग्गं अहिरूढाए मह हत्थे पदिदं । [वीथी-मध्याद्रणमत्तेन मदगजेन धूलीभिस्समं करेणोद्क्षिप्तं, सौधाग्रमधिरूढाया मम हस्ते पतितम् ]

( देवी पत्रं गृहीत्वा वाचयति )

देवी :- सहि सोहावदि, एक्कक्कं वि अक्खरं एत्थ ताए अहिल-सिदस्स णाहस्स मणं परिद्दवयितुं पज्जुत्तं । [सखि शोभावति, एकैकमप्यक्षरं अत्र तया अभिलषितस्य नाथस्य मनः परिद्रावयितुं प्रयुक्तम् ]

शोभावती :- तह एव्व । [तथैव]

देवी :- कं वा विहुं उद्दिसिअ एदं आलिहिदंत्ति तक्केहि ।
[कं वा विभुमुद्दिश्य, इदमालिखितमिति तर्कयसि ?]

शोभावती :-- (विमृश्य) महाराअं अंतरेण को वा अण्णो विहू हविस्सदि ?। [महाराजमन्तरेण को वा अन्यो विभुर्भविष्यति ?]

देवी :– अय्यवुत्ते वि एआरिसं किं तुए संभावीयदि । [आर्यपुत्रेऽपि एतादृशं किं त्वया सम्भाव्यते ?]

शोभावती :- सहि, सहस्सं कहेहि । "अवीसम्मणिज्जा एत्थ राआणो" । [सखि, सहस्रं कथय, अविश्वसनीया एत्र राजानः]

देवी :- सहि, तस्सिं ओसरे अय्यउत्तस्स परिअणो को वि तत्थ किं दिट्ठो ? [सखि, तस्मिन्नवसरे आर्यपुत्रस्य परिजनः कोऽपि तत्र दृष्टः ?]

शोभावती : (स्मृतिमभिनीय) दिट्ठो एव्व । [दृष्ट एव]

देवी :- को उण सो ? [कः पुनस्सः ?]

शोभावती :- मदगअदंसणमेत्तेण सम्मुच्छहिअओ णिपदिदो, पुढवीए, वेट्ठंतो अज्जकविरक्खसो । [मदगजदर्शनमात्रेण सम्मुग्धहृदयः निपतितः पृथिव्यां वेष्टमानः आर्यकविराक्षसः]

देवी :- ता तस्स हत्थादो एव्व एदं गलिदं भविस्सदि । [तस्मात्तस्य हस्तादेव एतद्गलितं भविष्यति ] होदु, काए इत्थिआए, पत्तं तस्स हत्थे संपत्तं ? [भवतु, कस्यास्स्त्रियः पत्रं तस्य हस्ते सम्प्राप्तम् ? ]

शोभावती :- (विचिन्त्य) चित्तवम्मणो रण्णो कण्णआए कतिमदीए भविस्सदि । [चित्रवर्मणः राज्ञः कन्यायाः कान्तिमत्याः भविष्यति ]

देवी :- कहं विअ ? [कथमिव ? ]

शोभावती :- कविरक्खसस्स बहिणी सुलोअणा ताए सहअरी । [कविराक्षसस्य भगिनी सुलोचना तस्यास्सहचरी ]

देवी :- (क्षणं विचिन्त्य) साहु तुए तक्किदं । अदो एव्व कंतिमदीणाम गणिअ अय्यउत्तेण सोहग्गगदेण भाग्योदयस्तवेति सिलोओ पढिदो । [साधु त्वया तर्कितम् । अत एव कान्तिमतीनाम गृहित्वा आर्यपुत्रेण सौधाग्रगतेन, "भाग्योदयस्तवे"ति श्लोकः पठितः ]

शोभावती :- सुट्ठु सुमरिदं होदीए । बंहबंधुणा अय्यकविरक्खसेण किं वि अवलविदं दाणिं । [सुष्ठु स्मृतं भवत्या । ब्रह्मबन्धुना आर्यकविराक्षसेण किमपि अपलपितं तदानीम् ]

देवी :- इमस्सिं कज्जे मूलं सो एव्व पडिभाइ । [अस्मिन्कार्ये मूलं स एव प्रतिभाति ]

शोभावती :- सच्चं एदं। [सत्यमेतत्]

देवी :- होदु, अय्यउत्तो कहिं दाणित्ति किं जाणासि ? [भवतु, आर्यपुत्रः कुत्रेदानीमिति किं जानासि ?]

शोभावती :- अय्यकविरक्खसेण सह किं वि संलवंतो उववणे चिट्ठइत्ति, होदीए सोहग्गदेवदापूजाणिमित्तं विविहकुसुमाइं उवहरंतीए वणपालिआए भणिदं। [आर्यकविराक्षसेन सह किमपि संल्लपमानः उपवने तिष्ठतीति भवत्याः सौभाग्यदेवतापूजानिमित्तं विविधकुसुमानि उपहरन्त्या वनपालिकया भणितम्]

देवी :- उपवणस्स मग्गं दंसहि। अय्यउत्तसमीवं गच्छह्म। [उपवनस्य मार्गं दर्शय। आर्यपुत्रसमीपं गच्छावः]

शोभावती :- इदो इदो आअच्छदु होदी। [इत इतः आगच्छतु भवती]

(इति परिक्रम्य उपवनप्रवेशं नाटयतः)

शोभावती :- एत्थ एव्व हत्थगलिदपत्तेण अय्यकविरक्खसेण समं अय्यउत्तो चिट्ठइ। [अत्रैव हस्तगलितपत्रेण आर्यकविराक्षसेन समं आर्यपुत्रः तिष्ठति]

देवी :- दूसहं वि अमरिसं कहं वि अंते णिअमिअ, एदाणं वअणं सव्वं सुणिस्सं। ता, एहि, लदंतरिता चिट्ठह्म। [दुस्सहमपि अमर्षं कथमपि अन्तःनियम्य एतेषां वचनं सर्वमपि श्रोष्यामि। तस्मादेहि, लतान्तरिते तिष्ठावः] (इति तथा कुरुतः)

[ प्रविश्य प्रतीहारी ]

प्रतीहारी :- जेदु भट्टा। अमच्चो विण्णवेदि – किंचि विण्णप्पं अत्थित्ति। [जयतु भर्ता। अमात्यः विज्ञापयति – किञ्चिद्विज्ञाप्यमस्तीति ]

राजा :- किं विलम्बेन, प्रवेश्यताम् सत्वरम्। [प्रतीहारी "तहेत्ति" [तथेति] (निष्क्रान्ता)

[ ततः प्रविशति सुचित्तः ]

सुचित्त :- विजयतां देवाः,

देशस्समृद्धसस्यस्ते धनाढ्यं कोशमन्दिरम्।
गजाश्वरथसैन्यं च वृद्धिमेति निरामयम्॥ -१११

राजा :- यद्वक्तुमागतोऽसि, तदभिधीयताम्।

सुचित्त :- अस्य किल चित्रवर्मनामधेयस्य महीपते :–

कन्या शुभगुणभूषा कान्तिमती नाम काञ्चननिभाङ्गी।
सौन्दर्यजन्मभूमिः सततं त्वामेव नाथमभिलषति॥ -११२

देवी :- पुव्वतक्किदं सव्वं सप्पदं जहत्थं जादं। [पूर्वतर्कितं सर्वं साम्प्रतं यथार्थं जातम् ]

राजा :- (स्वगतं)

यद्विरहेण ममेदं कृशतरमापाण्डु लक्ष्यते गात्रम् ।
हृदयं च विकृतिमयते सा किमपूर्वाऽभिधीयते भवता ॥
-११३

(प्रकाशं) ततस्ततः ।

देवी :- तदो तं परिगह्णिअ अंतवुरे मं विअ अवट्ठावेहि । [ततः तां परिगृह्य अन्तःपुरे मामिव अवस्थापय ]

सुचित्त :- चित्रवर्माऽपि निजकन्यकाहृदयं निशम्य भार्यामुखेन, परितुष्टमानसः तन्मनोरथपरिपूरणाय भवते तां प्रदातुं उद्युञ्जानः भवदभ्युपगमं प्रतीक्षते । अपि च, बहुभिःप्रकारैः अमुमर्थं महाराजोऽभ्युपगमयितव्य इति मां प्रत्यवादीत् ।

देवी :- अय्यवुत्तो एदस्स उत्तरं किं कहइस्सदित्ति अवहिदा सुणिस्सं । [आर्यपुत्रः एतस्योत्तरं किं कथयिष्यतीति अवहिता श्रोष्यामि ]

राजा :- (स्वगतं)

अनुरक्ता मयि बाला काङ्क्षति दातुं च गुरुजनस्तस्याः ।
तदपि न हृष्यति चेतः देवी नैवाऽनुमन्यते यदिदम् ॥-११४

(प्रकाशं)

सुदती नरेन्द्रकन्या सुकृतपरिपाकलभ्भनीया सा ।
स्वयमेव चेदुपेयात् परिणतभाग्योऽस्मि नाऽत्र सन्देहः ॥
-११५

सुचित्त :- (स्वगतं) अभ्युपगतमिव महाराजेन मद्वचनम् ।

देवी :- अय्यवुत्त एव्वं भणंतो तुमं णिहेदुएण कोवेण परवसा जादासित्ति कहं कहिदवंतासि ? [आर्यपुत्र, एवं भणन् त्वं "निर्हेतुकेन कोपेन परवशा जातासि" इति कथं कथितवानसि ?]

राजा :- परन्तु, दारैक्यनियमस्त्यवज्यः प्रतिज्ञातः कथं मया । (इत्यर्धोक्ते)

देवी :- सोहारोहणदो पुव्वं खु एसा कहा, दाणिं वुण मणोणुरूव्वं एव्व भणाहि । [सैधारोहणात्पूर्वं खलु एषा कथा, इदानीं पुनः मनोनुरूपमेव भण]

राजा :- किञ्च, संसर्गमन्यस्याः देवी नैवाऽनुमनुते ॥ -११६

देवी :- एआरिसं वि वअणं तुह महादो णिस्सरदित्ति अब्भुदं एदं । अवि अ, णाडअप्पयोगे गहिदवेसो विअ, केत्तिअं भअं अहिणेसि । [एतादृशमपि वचनं तव मुखान्निस्सरतीति अद्भुतमेतत् । अपि च, नाटकप्रयोगे गृहितवेष इव कियद्भयमभिनयसि ।]

कविराक्षस :- देवीए विब्भंतस्स तत्तहोदो तारिसी कण्णआ कहं लब्भीअदि । [देव्याः विभ्यतस्तत्रभवतः तादृशी कन्यका कथं लभ्येत ।]

देवी :- बह्मवंधो, होदु दाणिं। एव्वं कहेहि ? [ब्रह्मबन्धो, भवत्विदानीम्। एवं कथयसि ?]

शोभावती :- सहि, जइ मं आणवेसि, तदो दाणिं एव्व तस्स जीहं समूलं उम्मूलेमि। [सखि, यदि मामाज्ञापयसि, तदा, इदानीमेव तस्य जिह्वां समूलमुन्मूलयामि]

देवी :- होदु, चिट्ठ चिट्ठ। [भवतु, तिष्ठ, तिष्ठ।]

सुचित्त :- (स्वगतं) अनभ्युपगमशिरस्केण प्राथमिकवचनेन वृथा परितुष्टोऽस्मि। (प्रकाशं)

नियमो नैव नृपाणां अस्ति महाराज, परिणये स्त्रीणाम्।
विमलकुला रूपवती कन्या लभ्येत चेत्परिग्राह्या॥

-११६

देवी :- अमच्चणे भवारिसस्स एव्वंविहं वअणं ण साहु मण्णेमि [अमात्यत्वे भवादृशानां एवंविधं वचनं न साधु मन्ये]

सुचित्त :- अपि च, नागज्योतिषिकोऽपि तस्याः जननकालग्रहसम्पत्तिं पर्यालोच्य, "महाराजेन कन्यैषाऽवश्यं परिणेयेति कथयति।

राजा :- किमत्र निमित्तमभिदधाति ?

सुचित्त :- स एवाऽऽगत्य इदानीमभिधास्यति।

(प्रविश्य प्रतीहारी)

प्रतीहारी :- णाअजोदिसिओ, विण्णवेदि – किंचि भणिदुं आअदोम्हित्ति । [नागज्योतिषिकः विज्ञापयति – किञ्चिद्भणितुमागतोस्मीति ]

[ राजा भ्रूसंज्ञां नाटयति ]

प्रतीहारी :- (महाराजस्य भ्रूसंज्ञां दृष्ट्वा) तह [ तथा ] (इति निष्क्रान्ता)

. [ ततः प्रविशति नागज्योतिषिकः ]

नागज्योतिषिक :- कल्याणानि भवन्तु भवतः ।

रिपवो निहतास्सर्वे सुखिनस्सकला जनाः ।
वर्धस्व त्वं महाराज, यावत्तिष्ठति मेदिनी ॥ -११८

राजा :- उपविश्यतामत्र ।

[ नागज्योतिषिकः उपविशति ]

राजा :- किमिदानीमागमनकारणं भवतः ।

नागज्योतिषिक :- किञ्चिदभिधातुमागतोऽस्मि ।

राजा :- किं तदभिधीयताम् ।

नागज्योतिषिक :- चित्रवर्मनामधेयस्य महीपतेः कन्या कान्तिमती महाराजेनाऽवश्यं परिणेया ।

शोभावती :- अय्यकविरक्खसुचित्तणाअजोदिसिआ किदसमअबंधा-विअ दीसंदि । [ आर्यकविराक्षसुचित्तनागज्योतिषिकाः कृतसमयबन्धा इव दृश्यन्ते ]

देवी :- तह एव्व । [तथैव]

राजा :- किमालोच्यैवमभिधीयते ? भवता ।

कविराक्षस :- (वृक्षाग्रं दृष्ट्वा मुखं पिदधानः मन्दं) एसा कहा समावीअदु । पेख्ख, एदस्सिं रुख्खग्गे देवीए लीलासुओ दीसइ । ता, एत्थ प्पविट्ठा चिट्ठइ सा [एषा कथा समाप्यताम्. पश्य, एतस्मिन् वृक्षाग्रे देव्याः लीलाशुकः दृश्यते । तस्मात् अत्रोपविष्टा तिष्ठति सा]

शोभावती :- देवि, अय्यवुत्तस्स विसए, कविरख्खसस्स अवहिदत्तणं पेख्ख । [देवि, आर्यपुत्रस्य विषये, कविराक्षसस्य अवहितत्वं पश्य]

देवी :- को संदेहो । अण्णहा, कीस, तस्स भूसणाइ, वसणाइ अ दिणम्मि दिणम्मि विअरदि अय्यवुत्तो । [कस्सन्देहः । अन्यथा कुतस्तस्मै भूषणानि, वसनानि च दिने दिने वितरति आर्यपुत्रः]

राजा :- वयस्य, कृतं भीषणेन, रसालफलानि भक्षयितुं अन्तरान्तरा शुकोऽयमिहाऽऽगच्छतीति किं न जनासि ?

देवी :- दाणिं उण तह ण होदि । [इदानीं पुनस्तथा न भवति]

राजा :- (नागज्योतिषं प्रति) ननु पृच्छामि, किमालोच्यैवमभिधीयते भवतेति ।

देवी :- सहि, वअणं एदाणं विविहं सोढूण, उवट्ठिदं रोसं हिअए णिअमिदुं ण पारेमि। ता, एहि ओसरह्म। (इति उपसृत्य) अय्यउत्त, तुह अणुराअं एव्व। [सखि, एतेषां वचनं विविधं श्रुत्वा उपस्थितं रोषं हृदये नियन्तुं न पारयामि। तस्मादेहि, उपसरावः। आर्यपुत्र, तव अनुरागमेव]

[सर्वे देवीं दृष्ट्वा सम्भ्रान्ताः]

कविराक्षस :- (कटिनद्धकक्षः सन्) सत्थि होदीए [स्वस्ति भवत्यै] (इति धावनं नाटयति)

शोभावती :- कविरक्खस, इमिणा एव्व धावणेण एदं णअरं विसज्जिअ गच्छेहि। अण्णहा, तुह सिहाधारणे संसओ एव्व। [कविराक्षस, अनेनैव धावनेन इदं नगरं विसृज्य गच्छ। अन्यथा, तव शिखाधारणे संशय एव]

कविराक्षस :- (स्वगतं) जं जं भणिदव्वं, तं तं भणाहि। [यद्यत् भणितव्यं, तत्तद्वद] (प्रकाशं) कज्जंतरणिमित्तं गदुअ पुणो वि आअदो एव्वं भणंतिं तुमं सिक्खिस्सं। [कार्यान्तरनिमित्तं गत्वा, पुनरपि आगतः, एवं भणन्तीं त्वां शिक्षिष्ये]

(इति लतागृहनिलयनं नाटयति)

राजा :- (स्वगतं) प्रत्युत्पन्नमतिरपि वयस्यो न कस्याप्ययं समय- इति कपिप्लुतेन पलाय्य निलीयते क्वापि। अथवा, न तस्योपरि

दोषः आशङ्कनीयः । मयैव, पुरा शुकागमनेन देव्यागमनं शङ्कितवतो वयस्यस्य वचनमुपेक्षितम् । भुज्यते च सम्प्रति तस्य फलम् ।

**देवी :-** अय्यवुत्त अज्झतणवुत्तंतेण, सोग्गवुत्तंता वि विसदीकिदो ।
**[आर्यपुत्र, अद्यतनवृत्तान्तेन सौधाग्रवृत्तान्तोऽपि विशदीकृतः]**

**शोभावती :-** तस्सिं ओसरे विअ, इमस्सिं ओसरे वि, अ, सव्वं विअवलविदुं अय्यकविरक्खसो किंति एत्थ णावट्ठाविदो ।
**[तस्मिन्नवसर इव, अस्मिन्नवसरेऽपि च सर्वं अपलपितुं आर्यकविराक्षसः किमित्यत्र नाऽवस्थापितः]**

**देवी :-** अय्यवुत्त, दाणिं वि किं णीहेदुओ मे कोओ । सुचित्त, जइ होदा वि एव्वं करीअदि, मए किं कादेव्वं । णाअजोदिसिअ, परिणाहमहूसवे एक्कं वस्सणं आअमिस्सदित्ति केत्तिअं तुए उवक्कंतं । वह्मबंधो, कविरक्खस, तुम एत्थ एदस्स सव्वस्स वि मूलं । होदु कहिं गमिस्ससि । अय्यवुत्त, ताए अणुप्पेसिदं पत्तं कविरक्खसेण वीहिमज्झम्मि कहिं हि विसज्जिदंत्ति, होदा विसादो ण कादेव्वो । कोसघरए तं सुरक्खिदं चिट्ठइ । अहवा, एदेसु सव्वेसु दोसो ण संकणिज्जो । अय्यवुत्तेण एदं अणुमण्णीअदित्ति सव्वे वि तह तहेत्ति भणंदि । सहि सोहावदि, किं एत्थ, अंतेवुरं गच्छह्म । **[आर्यपुत्र, इदानीमपि किं निर्हेतुकः मे कोपः ? । सुचित्त, यदि भवताऽपि एवं क्रियते, मया किं कर्तव्यम् । नागज्योतिषिक, परिणयमहोत्सवे एकं**

वमनं आगमिष्यतीति कियत्त्वया उपक्रान्तम् । ब्रह्मबन्धो, कविराक्षस, त्वमेव एतस्य सर्वस्याऽपि मूलम् । भवतु, कुत्र गमिष्यसि ? । आर्यपुत्र, तया अनुप्रेषितं पत्रं कविराक्षसेण वीथीमध्ये कुत्रापि विसर्जितमिति भवता विषादः न कर्तव्यः । कोशगृहे तत् सुरक्षितं तिष्ठति । अथवा, एतेषु सर्वेष्वपि दोषो न शङ्कनीयः । आर्यपुत्रेण एतदनुमन्यत इति सर्वेऽपि तथा तथेति भणन्ति । सखि शोभावति, किमत्र, अन्तःपुरं गच्छावः ] (इति क्रुद्धा सती गन्तुमद्युक्ता)

[ शोभावती शिरः परिधुन्वती, साट्टहासं ]

शोभावती :- मायाहि, मायाहि ।

[ सर्वे साद्भुतं शोभावतीं पश्यन्ति ]

देवी :- सहि सोहावदि, माएत्ति किं भणासि [ सखि, शोभावति, मायाहीति किं भणसि ]

शोभावती :- का नाम शोभावती ? का च मायेति भणति ?

देवी :- सहि, किं एव्वं भणासि ? [ सखि, किमेवं भणसि ?

राजा :- त्वामधुना रुष्टा सती मा गच्छेति भणति ।

देवी :- तुह मणोणुरुव्वं एव्व तुमं कहेसि । [ तव मनोनुरूपमेव त्वं कथयसि ]

कविराक्षस :- (कोलाहलश्रुतिमभिनयन्) (समागत्य) एदाए कां वि दुट्ठग्गहो समाविट्ठो चिट्ठइ दाणिं । ता इमिणा दंडकट्ठेण एणं पहरिस्सं । [एतस्यां कोऽपि दुष्टग्रहस्समाविष्टः तिष्ठति इदानीम् । तस्मादनेन दण्डकाष्ठेन एनां प्रहरिष्यामि]

(इत्युपसर्पति)

शोभावती :-- (प्रहर्तुं विचिन्वन्तं तं प्रति) मूढ, एवं वक्ष्यसि ।

कविराक्षस :- (परावृत्य) वअस्स कहिं मिओ ? [वयस्य, कुत्र मृगः]

नागज्योतिषिक :- स एव दुष्टग्रहः कविराक्षसेऽपि समाविष्टः इव दृश्यते ।

कविराक्षस :- सुचित्त कहिं मिओ [सुचित्त, कुत्र मृगः]

*[सुचित्तः ध्यानं नाटयति]*

कविराक्षस :- देवि, कहिं मिओ । [देवि, कुत्र मृगः]

देवी :- अय्यवुत्त, परित्ताएहि मं । [आर्यपुत्र, परित्रायस्व मां]

(इति राज्ञः समीपमागच्छति)

राजा :- (स्वगतं) यत्किञ्चिदास्तामिदम् । अनया शोभावत्या निरवशेषः निर्वर्तितः कोपो देव्या इति सम्प्रतिष्ठितमात्मानं मन्ये । (प्रकाशं) देवि, मा भैषीः । सुचित, किं न विचारयसि ?

सुचित्त :- (विहस्य) विचारितमेव । एणं पहरिष्यामीति समापततः कविराक्षसस्य, "प्रहर्तुं मृगं अत्रागत्य विचिन्वन्नेव वक्ष्यसी" ति शापप्रदानेन, अन्यैरपि च तैस्तैर्विशेषैः, इत्थमवधार्यते – निखिल-जगद्रक्षिणी कमलाम्बिका शोभावत्यामस्यां सन्निधत्त इति । तदेनामुपतिष्ठे । (इत्यञ्जलिं बध्नाति)

कमलाम्बिका :-

निखिलनिगमशिरस्सिद्धान्तविचारप्रचरणातिनिपुणः भवानेक एव परतत्त्वाभिज्ञस्त्रिलोक्याम् ॥

(सर्वे नमस्कुर्वन्ति)

राजा :-

वीथीविटङ्कदयिते मनसिजजीवातुमूलिके मातः ।
द्राघीयसः कटाक्षान् करुणारसपूरपूरितान्वितनु ॥ -११९

(साशङ्कं) अम्ब, भक्तेन मया यदि नाम किञ्चिदपराद्धं तर्हि क्षम्यताम् ।

कमलाम्बिका :- अनन्यजनसामान्यभजनशालिना भवता वत्सेन न जातुचिदपि किञ्चिदपराद्धम् ।

राजा :- तर्हि मदनुग्रहचिकीर्षयैव किमिदानीमाविर्भावः भगवत्याः ?

कमलाम्बिका :- वत्सामेतां प्रति किञ्चिदेव प्रबोधयितुमागताऽस्मि ।

देवी :- जणणि, णमो दे । अवहिदह्मि । आणवेदु भअवदी ।
[जननि नमस्ते । अवहितास्मि । आज्ञापयतु भगवती ।]

कमलाम्बिका :-

शाहेन्द्रकान्तिमत्योः पाणिपरिग्रहणभद्रेण ।
प्रथितयशसो भवत्याः तनया बहवो जनिष्यन्ते ॥ -१२०

किञ्च,

भूमण्डलमखिलमिदं भोग्यं सहसैव भवति ते भर्तुः ।
परिपन्थिनोऽपि सर्वे प्रणमन्त्यस्यैव पादपीठतलम् ॥ -१२१

तदद्य, सत्वरं प्रवर्त्यतां कान्तिमतीमहाराजयोः कल्याणम् ।

देवी :- चिरकालं आरहिअ पुत्तणिमित्तं तुमं पत्थअंती अहं दाणिं अणुगहिदह्मि । [चिरकालमारभ्य पुत्रनिमित्तं त्वां प्रार्थयमाना अहमिदानीमनुगृहीताऽस्मि ]

राजा :-

तस्याः पाणिपरिग्रहस्तु परमं भद्रं ततश्चेद्बहोः
कालादेतदभीप्सितं प्रियतमं पुत्रित्वमप्यात्मनः ।
भाग्यं मे फलितं, तथापि मनसो देव्या निरुत्साहतां
मन्वानेन मया तदेतदियता कालेन नोऽमन्यत ॥
-१२२

तदपि समीकृतमागत्येदानीं भगवत्या ।

राजा :- (सप्रणामं) क्रियतां प्रसादः प्रियवयस्यस्य ।

कमलाम्बिका :- कविराक्षस, यथावस्थो भव (इत्युपरमति)

शोभावती :- (प्रकृतिं प्राप्य. परितः पश्यति)

सर्वे :- (शोभावतीं दृष्ट्वा) अन्तर्हितैव भगवती कमलाम्बिका !

शोभावती :- देवि, एत्तिअं कालं कहं जादह्मि । [देवि, एतावन्तं कालं कुत्र जाताऽस्मि ।]

देवी :- सोहावदि, संणिहिदाए भअवदीए परवसहिअआ जादोसि । [शोभावति, सन्निहितायां भगवत्यां परवशहृदया जाताऽसि]

कविराक्षस :- वअस्स, एत्तिअं कालं कहं जादोह्मि । [वयस्य, इयन्तं कालं कुत्र जातोऽस्मि]

राजा :- शोभावत्यां सन्निहितायाः देव्याः शापेन मोहितोऽसि।

कविराक्षस :- किं दाणिं वि एदाए सण्णिहिदा चिट्ठइ देवी । [किमिदानीमपि एतस्यां सन्निहिता तिष्ठति देवी]

राजा :- नहि, नहि ।

कविराक्षस :- वीसासणिमित्तं पुणोवि दंडकट्ठेण पहरिस्सं । [विश्वासनिमित्तं पुनरपि दण्डकाष्ठेन प्रहरिष्यामि]

(इति प्रहर्तुमुद्युङ्क्ते, सर्वे हसन्ति)

शोभावती : मूढ, ण विसुमरेहि एदं। [मूढ, न विस्मरैतत्]

कविराक्षस :- वअस्स, सच्चं एव्व पकडिट्ठा एसा [वयस्य, सत्यमेव प्रकृतिस्था एषा]

नागज्योतिषिक :- एतदेव, देव्याऽभिहितं भावि भद्रं मया पर्यालोच्य महाराजस्य कान्तिमतीपरिणयोऽभिहितः।

कविराक्षस :- मए वि तह एव्व। [मयाऽपि तथैव]

देवी :- (विहस्य) सव्वण्णोसि तुमं। [सर्वज्ञोऽसि त्वम्]

कविराक्षस :- जह णाअजोदिसिओ। [यथा नागज्योतिषिकः]

देवी :- अय्यवुत्त, किं विलंबीअदि। दाणिं एव्व चित्तवम्मा इमस्सिं एव्व उववणे समागदुअ णिअकण्णअं कंतिमदिं तुह पडिवावेदु अहं वुण गहिदकांतिमदीपाणिकमलं तुमं अंतेउरगदं पच्चा पेक्खिस्सं। [आर्यपुत्र, किं विलम्ब्यते। इदानीमेव, चित्रवर्मा अस्मिन्नेवोपवने समागत्य निजकन्यकां कान्तिमतीं तुभ्यं प्रतिपादयतु। अहं पुनः गृहितकान्तिमतीपाणिकमलं त्वां अन्तःपुरगतं, पश्चात् प्रेक्षिष्ये] (इत्युक्त्वा ससखी निष्क्रान्ता)

नागज्योतिषिक :-

धर्मैकदत्तमनसः त्यागाधीशानपदलसन्मौलेः।
नानाविधानि भवतः स्वयमेव समुद्भवन्ति भद्राणि ॥
-१२२

सुचित्त :- (नेपथ्याभिमुखमवलोक्य) क कोऽत्र भोः ?

(प्रविश्य पुरुषः)

पुरुष :- विजयतां देवः ।

सुचित्त :- नगरमिदं समन्ततः परिष्क्रियताम् । अपि च, परितोऽपि सम्भ्रियन्तां कल्याणसम्भाराः ।

(पुरुषस्तथेति निष्क्रम्य, नेपथ्यान्तरे स्थित्वा)

एताः किञ्चिदुदस्तहस्तकमलोदञ्चन्मणीभाजन-
प्रक्षिप्तप्रसवाधिवासितदिशः स्मेराननाः सर्वतः ।
सङ्घीभूय कृतत्वराः बहुविधालङ्कारविभ्राजिताः
चेटच्यः सम्प्रति सञ्चरन्ति नगरे हारिद्रवासोभृतः ॥
-१२३

किञ्च,

सुवर्णमणिसम्भृता विपणिवीथिका दृश्यते
त्रिकीर्णकुसुमावलीपरिमलः परिघ्रायते ।
मृदङ्गजनितोऽभितो धिमिधिमिस्वनः श्रूयते
तदद्य परिहृष्यतीव हसतीव सेयं पुरी ॥ -१२४

सुचित्त :- (आकर्ण्य) देव, विज्ञापना । यावत्प्रस्तुतमहोत्सवारम्भाय ससखीजनया कन्यया समं चित्रवर्माणमिहैव आनयति कविराक्षसः ।

[कविराक्षसः तहेत्ति निष्क्रम्य यथानिर्दिष्टेन चित्रवर्मणा सह पुनः प्रविशति]

( राजा अभ्युपागमनं नाटयति )

चित्रवर्मा :- परिष्क्रियतामिदं भद्रासनम् ।

राजा : तत्रभवतापि ( इत्यर्धासनं निर्दिश्य ) चित्रसेनसम्बन्धादिह पुनर्दर्शनं तत्रभवतः ।

चित्रवर्मा :- महाराजदिदृक्षासमागतेन मया दृष्टानि द्रष्टव्यानि । दृश्यते चाऽयं महोत्सवः ।

सुचित्त :- चित्रवर्मा निवेदयति – " मम कन्यका कान्तिमती जन्मपरम्पराकृतसुकृतपरिपाकेन भवन्तमेव कान्तमभिलषति । तदिमां इदानीमेव परिणयतु महाराज " इति ।

राजा :- अयमेव कमलाम्बिकायाः अनुग्रहः । तदद्य, यथा रोचते तत्रभवते ।

चित्रवर्मा :- महाराज, शीघ्रनिर्वर्तनीयानि श्रेयांसि सर्वाणि ।

सुचित्त :- नागज्योतिषिक, मुहूर्तो निर्णीयताम् ।

नागज्योतिषक :- अस्मिन्नेव कन्यालग्ने कन्याप्रदानं अभ्यर्हितम् ।

चित्रवर्मा :- वत्से, कान्तिमति, समीपमायाहि ।

कान्तिमती :- (अपवार्य) अइ सुलोअणे, मह चंचलत्तणकालणादो एव्वं जादंत्ति सहं पविसिदुं लज्जेदि मे हिअअं । [ अयि सुलोचने, मम चञ्चलत्वकारणादेवं जातमिति सभां प्रवेष्टुं लज्जते मे हृदयम् ]

मुत्तोच्चना :- सहि, एआरिसे महापुरिसे किदाणुराआ तुमंत्ति सव्वो वि जणो सिलाहिस्सदि । [सखि, एतादृशे महापुरुषे कृतानुरागा त्वमिति सर्वोऽपि जनः श्लाघिष्यते ]

( राजानं विलोक्य )

सहि, कंतिमदि, अच्चुण्णदरअणसिंहासणगदो महाराओ उदअसिहरि-सिहरपरिवत्ती भअवं भाणुमाली विअ पडिभाइ । किंअ, कथ्थूरिआपंकविलसिदकंधरो सुंभकंचुअधारी हरिद्दाविसेसविलिहिद-वट्टुलतिलअविलसिदफाणदलो कअलीदलसोहिसोणमअशिरथ्थाणबंधो चंदकलासोहिदजडाजूडो निलोअणो णीलकंठो विअ लक्खीअदि । अविअ, परिसरचिट्ठंतपरिअणपरिहिददुकूलकंतिसंदोहधवलिदे इमस्सि उववणे णिसण्णं महाराअं, दुद्धद्धिमज्झवट्टिणं रमारमणं विअ मण्णेमि । अण्णंअ, सोणमअसिरथ्थाणावलंविमोत्तिअसरो चंदचूडजडातडपरिगलिदभाईरहीजलबिंदुसंदोहसंदेहं करेदि । एदंअ, मणिवंधसोहिदं कंकणं महाराअभुजग्गलग्गखग्गलदाखंडिदप्पथ्थथ्थि-पथ्थिअथामविणिभिण्णंतरो सरणागदो हिमसणी विअ दीसइ । ता, एदस्सिं महाणुहावे भग्गवसादो लग्गं तुह हिअअं ।

[सखि, कान्तिमति, अत्युन्नतरत्नसिंहासनगतः महाराजः उदयशिखरिशिखरपरिवर्ती भगवान् भानुमाली इव प्रतिभाति । किञ्च, कस्तूरिकापङ्कविलसितकन्धरः शुभ्रकञ्चुकधारी हरिद्राविशेषविलिखितवर्तुलतिलकविलसितफालस्थलः कदलीदलशोभिस्वर्णमयशिरस्त्राणबन्धः, चंद्रकलाशोभितजटाजूटः त्रिलोचनः नीलकण्ठ इव लक्ष्यते । अपिच, परिसरतिष्ठत्परिजन-

परिहितदुकूलकान्तिसन्दोहधवलितेऽस्मिन् उपवने निषण्णं महाराजं दुग्धाब्धिमध्यवर्तिनं रमारमणमिव मन्ये। अन्यच्च, स्वर्णमयशिरस्त्राणावलम्बिमौक्तिकसरः चन्द्रचूडजटातटपरिगलित-भागीरथीजलबिन्दुसन्दोहसन्देहं करोति। एतच्च, मणिबन्ध-शोभितं कङ्कणं महाराजभुजाग्रलग्नखड्गलताखण्डितप्रत्यर्थिपार्थिव-स्तोमनिर्भिन्नान्तरः शरणागतो दिनमणिरिव दृश्यते। तस्मात् एतस्मिन्महानुभावे भाग्यवशात् लग्नं तव हृदयम्]

कान्तिमती :- (लज्जामन्थरं राजानमवलोक्य) विअसिदपुंडरीअदलदीह-विसाललोअणं, पुण्णचंदवदणं, कुंदकुसुमविराजिददंतपंतिं, किं बहुणा, सक्खावम्महं विअ अवट्ठिदं वि जहेच्छं पेक्खिदुं ण पारेमि लज्जाए। [विकसितपुण्डरीकदलदीर्घविशाललोचनं, पूर्णचन्द्र-वदनं, कुन्दकुसुमविराजितदन्तपंक्तिं, किं बहुना, साक्षान्मन्मथ-मिवाऽवस्थितमपि यथेच्छं प्रेक्षितुं न पारयामि लज्जया]

राजा :- (कान्तिमतीं विलोक्य, स्वगतं)

कुचभरनमन्मध्या मल्लीस्रजा क्रमवेष्टितां
अपि च दधती वेणीमागुल्फभागविलम्बिनीम्।
परिसरगता बाला लीलेव शम्बरवैरिणः
कलयति दृशोरेषा मोदं सरोरुहलोचना॥ -१२५

किञ्च,

चातुर्यं चतुराननः स्फुटयितुं किं निर्ममे सुन्दरीं
किं वाऽसौ बलशासनाय कुपिता भूमिं प्रपन्ना शची ।
ज्योत्स्ना, चन्द्रकला, मृणालशकलाः किं मूर्तिमन्यादृशीं
प्राप्ताः,हन्त वधूमिषेण यदि वा भाग्यं ममाऽऽलक्ष्यते ॥
-१२६

( कान्तिमत्या गतिं निरूप्य )

तरलाक्षि, राजहंसाः तव गतिविभवेन निर्जिता नूनम् ।
नियतमृणालाहाराः मानससरसीतटे तपस्यन्ति ॥ -१२७

चित्रवर्मा :- कमलाम्बिकानिस्सीमकृपाभाजनस्य भवतः प्रयच्छामि कन्यामिमामिति नेयत्तया परिच्छिद्यते ममाऽऽनन्दः

नागज्योतिष :- विलम्बो माभूत् ।

चित्रवर्मा :- ( कन्यां हस्ते गृहीत्वा )

राजेन्द्र कान्तिमत्याः सततं त्वामेव नाथमिच्छन्त्याः ।
कण्ठे काञ्चनमालां कल्पय कुशलाय भूयसे सहसा ॥
-१२८

[ राजा कान्तिमतीकण्ठे काञ्चनमालां कल्पयति ]

( नेपथ्ये दुन्दुभिघोषः )

( सर्वे आकर्णयन्ति )

सुचित्त :- भगवतः त्यागाधिराजस्य माध्यन्दिनपूजावसरप्रवर्तितः दुन्दुभिघोषस्समुज्जृम्भते ।

चित्रवर्मा :- अतर्कितमिदं भाविकल्याणपरम्परासूचकम् ।

राजा :- (कान्तिमत्याः पाणिं परिगृह्णन्, स्वगतं)

निषण्णा सौधाग्रे नृपतितनया लोचनपथं
मम प्राप्ता पूर्वं, तदनु कथिता चाटुवचनैः ।
समाश्लिष्टा गाढं तदनु च लताकुञ्जभवने
चकोराक्षी सैषा मम भवनभूषा विजयते ॥ -१२९

(कमलाम्बिकामुद्दिश्य, सप्रार्थनम्)

देवि त्यागाधीशशुद्धान्तभूषे
वन्दारुश्रीकल्पनाकल्पवल्लि ।
एतद्भद्रं त्वत्कटाक्षादवाप्तं
भूयोऽस्माकं मङ्गलानि प्रथन्ताम् ॥ -१३०

कान्तिमती :- (सोच्छ्वासं स्वगतं)

हंत लद्धमणोरहम्हि
एआरिसस्स रण्णो अंतेवुरसुंदरी ।
भविअ दाणिं मह
पुडवीए जणणं सहलंत्ति मण्णेमि ॥ -१३१

[हन्त, लब्धमनोरथाऽस्मि, एतादृशस्य राज्ञः अन्तःपुरसुन्दरी। भूत्वा. इदानीं मम पृथिव्यां, जननं सफलमिति मन्ये॥]

सुलोचना :- देवि, महाराअप्पिए, कुसलं होदु होदीए। [देवि, महाराजप्रिये. कुशलं भवतु भवत्याः]

[कान्तिमती लज्जां नाटयति]

सुचित्त :- चित्रवर्मन्, फलितस्ते मनोरथः।

चित्रवर्मा :- सिद्धसङ्कल्पेन महानुभावेन भवता।

(प्रविश्य प्रतीहारी)

प्रतीहारी :- जेदु भट्टा। देवी विण्णवेदि – "वैवाहिअभूसणभूसिदाए कंतिमदीए मह वहिणीए समं अज्जवुत्तं पेक्खिदुं इच्छंह्मि" त्ति। [जयतु भर्ता। देवी विज्ञापयति – "वैवाहिकभूषणभूषितया कान्तिमत्या मम भगिन्या समं आर्यपुत्रं प्रेक्षितुमिच्छामी" ति]

मंत्रे :- साधु, देवि साधु। तवैवाऽनुरूपमेतादृशं वचनम्।

कविराक्षस :- वअस्स, कंतिमदीवल्लह, वड्ढेहि वड्ढेहि। [वयस्य, कान्तिमतीवल्लभ, वर्धस्व वर्धस्व]

राजा :- त्वदधीना खल्वेवंविधसम्बोधनभाजनताऽस्माकम्।

कविराक्षस :- (संस्कृतमाश्रित्य) किं ते भूयः प्रियमुपहरामि।

राजा :-

सुचित्तः सचिवो यस्य, वयस्यः कविराक्षसः।
प्रसन्ना कमलाम्बा च, किमन्यत्तस्य मे प्रियम्॥ -१३२

तथापीदानीं इदमस्तु भरतवाक्यम् —

संवर्धन्तामजस्रं सरसमृदुगिरां सत्कवीनां वचांसि
स्तम्भं प्राप्नोतु सद्यः श्रुतिपुटपरुषा साहिती दुष्कवीनाम् ।
आचन्द्रार्कं प्रबन्धो बुधजनहृदये वर्ततां हृद्य एषः
श्रीमानस्याऽपि नेता जयतु भुवि चिरं शाहराजः प्रजाभिः ॥
-१३३

॥ इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभस्य जगदाचार्यस्य
तिप्पाध्वरिणः तनूजेन चोक्कनाथविद्वत्कविना विरचिते
कान्तिमतीशाहराजीयनाटके पञ्चमोऽङ्कः ॥

॥ श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्सेविताय श्रीरामाय नमः ॥

॥ शेषाद्रिणा स्वहस्तलिखितम् ॥

॥ समाप्तमिदं नाटकम् ॥

* * *

द्वयोर्मातृकयोरन्ते —

॥ जगदाचार्यस्य ॥

अयि मयि नहि रक्तः चुम्बितोल्लेखनैर्यः
स तु विभुरनुरञ्ज्यः पुस्तकोल्लेखनेन ।
पतिरतनुविलासैः स्वैरसाध्योऽपि साध्यः
चतुरतरतरुण्या पादसंवाहनेन ॥ १ ॥



## ॥ एतन्नाटकस्थानां श्लोकानामकाराद्यनुक्रमणिका ॥



